श्रीः

श्रीमते श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमते वरदार्यमहादेशिकाय नमः

रामानुजदयापात्रं ज्ञानवैराग्यभूषणम् ।
श्रीमद्वेङ्कटनाथार्यं वन्दे वेदान्तदेशिकम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्योमे सन्निधत्तां सदा हृदि ॥

श्रीमल्लक्ष्मणयोगीन्द्र सिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहम्भजे ॥

# श्री र ह स्य त्र य सा रा र्थ सं ग्र हः



पद्मानायक पादपद्मयुगले पर्यायभृंगात्मना
चेतोमे चिरपक्षपातविभवादास्वादमासीदतु ।
अध्यात्म श्रुतिदुग्धसिन्धुलहरी संचारसम्भावितैः
हंसश्रीरधिगम्यते सुकृतिभिर्यत्रोल्लसद्बुद्धिभिः ॥

श्रीमद्वरदनाथेन वेदान्ताचार्यसूनुना ।
रहस्यत्रयसारार्थसंग्रहोऽयं प्रकाश्यते ॥

सदाचार्यकटाक्षेण शरणागतस्य रहस्यत्रयार्थो नित्यभोग्य इति सत्वोत्तराणां सम्प्रदायः—रहस्यत्रयमिति श्रीमदष्टाक्षरो द्वयं चरमश्लोकश्च कथ्यते तत्र श्रीमदष्टाक्षरेण स्वस्वरूप परस्वरूपादिविज्ञानं प्राधान्येन क्रियते । तेन प्रतिबुद्धस्याधिकारिणः शरणागतिमन्त्रेण शरणागत्यनुष्ठानप्रकारः प्रकाश्यते–

अनेन मन्त्रेणानुष्ठेयस्य प्रपदनस्यापेक्षिताधिकारनैरपेक्ष्यादीनर्थान् विशदमेव प्रकाशयन् सर्वपापमोक्षणपूर्वक भगवत्प्राप्तिरूप पुरुपार्थोपायभूतां शरणागतिं कर्तव्यत्वेन विधाय न्यस्तभरमधिकारिणं निश्शोकयति चरमश्लोकः ॥

अत्र प्रथमरहस्यं पदत्रयात्मकं, द्वितीयं तु, पदषट्करूपं तृतीयं पुनर्द्वादशपदयुक्तमित्युत्तरोत्तरं पदद्वैगुण्यं द्रष्टव्यम्। अत्र त्रयाणां व्याख्येयव्याख्यानभावेन मिथोऽन्वयः प्रसिध्यति। तत्र श्रीमदष्टाक्षरस्य शेपशेपिसर्वतत्त्व कण्ठोक्त्या 'न मन्त्रोऽष्टाक्षरात्परः' इत्यादिप्रमाणसहस्रेणचाचार्यैर्विशेपतः संग्रहःक्रियते। इतरव्यापकमन्त्राभ्यामेतस्य मन्त्रस्यातिशयेनार्थविशेष प्रतिपादकत्वमन्त्रार्थप्रकाशनेनैव ज्ञाप्यते। विष्णुगायत्र्यामप्येतन्मन्त्राक्षरस्य प्रथमोपादानमेतत्प्रभावातिशयद्योतनार्थमिति मन्तव्यम् ॥

अयं च मन्त्रः यदा प्रणवेन साकमष्टाक्षरो भवति तदास्य वैदिकत्वं त्रैवर्णिकाधिकारत्वं च भवति। यदा प्रणवरहितत्वं तदा तान्त्रिकत्वं सर्ववर्णाधिकारत्वं च। तच्चोक्तम्—

वैदिकं ब्राह्मणानां स्याद्राज्ञां वैदिकतान्त्रिकम्।
तान्त्रिकं वैश्यशूद्राणां सर्वेषां तान्त्रिकन्तु वा ॥

इति। इदं वचनं प्रायिकं ब्राह्मणप्राशस्त्यपरं शूद्राणां वैदिकानधिकारपरं च। वैश्यस्यापि वैदिकेऽप्यधिकारात्। अन्यच्चाप्यत्र—

न स्वरःप्रणवोऽङ्गानि नाप्यन्यविधयस्तथा।
स्त्रीणांतु शूद्रजातीनां मन्त्रमात्रोक्तिरिष्यते ॥

इत्यादिवचनमनुसन्धेयम्। इयं चात्र स्वरव्यवस्था।

षष्ठाद्ययोरुदात्तस्स्यात्स्वरितोन्त्यद्वितीययोः।
प्रचयस्त्रिचतुर्थाभ्यां निहितं पञ्चमाक्षरम् ॥
उदात्तस्वर ओंकारः—

इति। कथं तर्हि प्रणववैधुर्ये मन्त्रस्याष्टाक्षरत्वं भवति। उच्यते—

तत्रोत्तरायणस्यादिर्बिन्दुमान्विष्णुरन्ततः।
बीजमष्टाक्षरस्यस्यात्तेनाष्टाक्षरता भवेत् ॥

इति। इदं वचनं प्रणववैधुर्येऽप्यष्टाक्षरत्वमुपपादयतीत्यस्यार्थउपदेशादेवाव-

गम्यत इति विविच्य लिख्यते । यदात्वयं मन्त्रः प्रणवचतुर्थीविधुरः तदा प्रति लोमानामप्यधिकारो भवति । दृश्यते हि–

नमो नारायणेत्युक्त्वा श्वपाकः पुनरागमत् ।

इति वराहपुराणवचनं तदा संकीर्तनमात्रत्वमेवेति न कश्चिद्विरोधः । अयं च मन्त्रः पदत्रयात्मक इति श्रुतिरेव विभज्य दर्शयति—'ओमित्येकाक्षरं, नम इति द्वे अक्षरे, नारायणायेति पञ्चाक्षराणि' इत्येवमादिका । तत्र प्रथमपदं अक्षरत्रयात्मकम् । अकारोकारमकारभेदात् । तत्र अकारस्सर्वकारणभूतं सर्व रक्षकं सर्वशेषिणं श्रियःपतिमाह । तथा हि–

समस्तशब्दमूलत्वादकारस्य स्वभावतः ।
समस्तवाच्यमूलत्वाद्ब्रह्मणोऽपि स्वभावतः ॥
वाच्यवाचकसम्बन्धस्तयोरर्थात्प्रतीयते ।

इति । इदं वचनं सर्वशब्दकारणभूतोऽकारस्सर्ववाचककारणभूतं परमात्मानमाहेति वदति । अकारस्य सर्वशब्दकारणत्वं सर्ववेदमूलभूतप्रणवप्रकृतित्वात् । श्रूयते हि 'योवेदादौ स्वरःप्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यःपरस्समहेश्वरः' इति । अत्र प्रणवप्रकृतिरकारः । तथा च अकारप्रकृतिकत्वादकारविशिष्टस्य प्रणवस्य यःपरः यो वाच्यतया प्रधानः स महेश्वरः सनारायण इत्यर्थः । 'अकारो विष्णुवाचकः' इति नियमात् । 'अइति भगवता नारायणस्य प्रथमाभिधानमभिदधता किंनाम मङ्गलं नकृतम्' इति शाब्दिकैरभिधानाच्च । 'अक्षराणामकारोऽस्मि' इति भगवद्वचनाच्च । कथं तर्हि महेश्वरशब्दः प्रयुज्यते ? महानोश्वरो महेश्वर इति श्रियःपतेरेवाभिधानमिति न विरोधः । अतएव 'तमीश्वराणां परमं महेश्वरं, तंदैवतानां परमं च दैवतम्' इति जगत्कारणत्वेन सम्प्रतिपन्ननारायणपरतया तत्रतत्र महेश्वरशब्दः प्रयुज्यते ॥

एवंचसति इतरेषां तन्नामधारणात्तद्गुणलेशयोगित्वात्तच्छेषत्वाच्चेति सर्वमुपपन्नमेव । 'अकारोवै सर्वा वाक्' इत्यादीन्यपि वचनानि अकारस्य सर्व शब्दमूलत्वमाहुः । तेन भगवतस्सर्वकारणत्वसिद्धिः ॥

ननु कथं नित्यानामीश्वरः कारणम् ? इत्थम् । अनित्यास्तावत् अनित्येच्छयोत्पन्नाः नित्यास्तावत् अनित्येच्छया सिद्धा इति तत्तद्धर्मिग्राहकप्रमाणै-

रेवावगम्यते तदुक्तमभियुक्तैः–

इच्छातएव तव विश्वपदार्थसत्ता
नित्यं प्रियास्तवतु केचन तेहि नित्याः ।

इति । अतः ईश्वरस्य सर्वकारणत्वसिद्धिः । तच्च कारणं त्रिविधम् । निमित्तोपादानसहकारिभेदात् । सङ्कल्पविशिष्टवेषेण निमित्तत्वम् । सूक्ष्मचिदचिद्विशिष्टवेषेण उपादानत्वम् । सहकारि भूतकालाद्यन्तर्यामितया सहकारित्वमिति विभागः । 'अवरक्षण' इति धातावकारमात्रावशेषतया व्युत्पन्नोऽयमकारस्सर्वरक्षकं श्रियःपतिमाह । इयमत्र व्युत्पत्तिः 'अवरक्षण' इत्यस्माद्धातोरन्येभ्योऽपि च दृश्यत इति क्विप्रत्यये कृते 'लोपो व्योर्वलि' इतिधातोर्वकारस्य लोपे कृतेऽव पृक्तस्येति प्रत्ययवकारेच लुप्तेसति अइति व्यवतिष्ठते । कृदन्तत्वेन कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञायां तादर्थ्ये विहितचतुर्थ्येकवचने कृते आयइति भवति । पुनस्सुपांसुलुगिति सुब्लोपे कृते अइति (लुप्त) चतुर्थ्यन्तं पालयितृत्ववाचिपदं भवति । दृश्यते हि–

लक्ष्म्यासह हृषीकेशो देव्या कारुण्यरूपया ।
रक्षकः सर्वसिद्धान्ते वेदान्तेषु च गीयते ॥

इत्यादि । तथाचसति एतन्मन्त्रविवरणरूपेण शरणागतिमन्त्रेण श्रियःपतित्वस्य कण्ठोक्तत्वादत्राप्युपयुक्तसहधर्मचारिणीसम्बन्धो ज्ञातव्य इत्युक्तं भवति अतो रक्षकत्वमपि भवतीत्युक्तम् । 'ब्रह्मणेत्वा महस ओमित्यात्मानं युञ्जीत' इति प्रणवविवरणरूपे वाक्ये ब्रह्मण इति चतुर्थ्युत्पादनादत्रापि चतुर्थ्युत्पादयितव्या । सातु छान्दसत्वादत्र लुप्तेति मन्तव्यमित्युक्तं प्रागेव । तथा च तादर्थ्ये चतुर्थी वक्तव्येति मकारवाच्यस्य जीवस्य अकारवाच्यपरमात्मापेक्षया तादर्थ्यं प्रतीयते । अतो भगवतश्शेषित्वं सिद्धं भवति । तादर्थ्यमेवहि शेषत्वं शेषत्वप्रतिसम्बन्धी शेषीत्यभिधीयते । अत्र प्रमाणानि–'पतिं विश्वस्यात्मेश्वरम्' 'अस्या ममच शेषंहि विभूतिरुभयात्मिका ।'

इत्येवमादीनि स्वयमेवानुसन्धेयानि । 'उभयाधिष्ठानंचैकं शेषित्वम्' इत्यादि च पूर्वेषां वचनम्, अस्यार्थः । यथा पुत्रापेक्षया मातापित्रोर्द्वयोरप्येकं शेषित्वं

यथा च । पत्न्यपेक्षया भर्तुश्शेषित्वात्पितुरेव सर्वशेषित्वं । एवमस्मदपेक्षया दिव्यदम्पत्योश्शेषित्वमेकमेव । परस्परविचारे लक्ष्म्यपेक्षया भर्तुर्भगवतश्शेषित्वमिति स्वव्यतिरिक्तसर्वशेषित्वं भगवतएवेति सिद्धं भवति । लक्ष्म्यास्तु एको न सर्वशेषित्वमुक्तम् । तदुक्तमाचार्यैः—

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥

इति । तत्र भगवच्छास्त्रोक्तानि बहूनि प्रमाणान्यनुसन्धेयानि । तथा हि विष्वक्सेनाय भगवानाह—

परव्यूहादिकान् पंचप्रकारानात्मनो वदन् ।
तथा लक्ष्म्याः प्रभावं च वक्ष्ये शृणु समाहितः ॥
गुणतश्च स्वरूपेण व्याप्तिः साधारणी मता ।
यथा मया जगद्व्याप्तं स्वरूपेण स्वभावतः ॥
तया व्याप्तं जगत्सर्वं नियन्त्रीच तथेश्वरी ।
मया व्याप्ता यथा साहि तया व्याप्तोऽहमीश्वरः ॥
मम तस्याश्च सेनेश वैलक्षण्यमिदं शृणु ।
मच्छेषभूता सर्वेषामीश्वरी वल्लभा मम ॥
तस्याश्च जगतश्चाहमीश्वरो वेदविश्रुतः ।
अस्या मम च शेषं हि विभूतिरुभयात्मिका ॥
इति श्रुतिशिरस्सिद्धं मच्छास्त्रेष्वपि मानद ।
तथा भूमिश्च नीळाच शेषभूते मते मम ॥
यथाऽऽत्मनां तु सर्वेषां ज्ञानतो व्याप्तिरिष्यते ।
स्वरूपतस्तु न तयोर्गुणतो व्याप्तिरिष्यते ॥

इति । अस्मिन्नेव शास्त्रे तन्त्रान्तरे लक्ष्मीवाक्यम् ।

अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनी ।
आत्मा ससर्वभूतानामहं भूतो हरिस्स्मृतः ॥
अहन्ता सर्वभूतानामहमस्मि सनातनी ।
येन भावेन भवति वासुदेवस्सनातनः ॥
भवद्भावात्मकं ब्रह्म ततस्तच्छास्त्रगं परम ।

भवान्नारायणो देवो भावो लक्ष्मीरहं परा ॥
लक्ष्मीनारायणाख्यं तद्धृता ब्रह्म सनातनम् ।
अहं तया समाक्रान्तो ह्यहमर्थःप्रसिध्यति ॥
अहमर्थसमुग्धाच सा हन्ता परिकीर्तिता ।
अन्योन्येनाविनाभावादन्योन्येन समन्वयात् ॥
तादर्थ्यं विद्धि सम्बन्धं मम नाथस्यचोभयोः ।

इति । न केवलं भगवच्छास्त्रएवैतदुच्यते । इममर्थं पराशरोऽपि व्यक्तमुक्तवान्

निल्यैवैषा जगन्माता विष्णोश्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥
त्वया च विष्णुनाचाम्ब जगद्व्याप्तं चराचरम् ।

इति च । तत्रैवमेतत्सर्वमभिप्रेत्योक्तं प्रपन्नपारिजाते प्राक्तनाचार्यैः । अयं च शेषशेषिभावः

दासभूतास्स्वतस्सर्वेह्यात्मानःपरमात्मनः । इति
स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यंहरेस्स्वाम्यं स्वभावं च सदा स्मरेत् ॥

इति वचनात्स्वाभाविकः । उपाधिनिर्देशाभावाच्च । तथा चतुर्थ्याः शेषत्वस्यायोगव्यवच्छेदः प्रतिपाद्यते । उपाधिनिर्देशाभावाच्च । तेन शरीरात्मभावोऽपि सिद्धो भवति । 'यस्य चेतनस्य यद्द्रव्यं शेषतैकस्वरूपं तत्तस्य शरीरम्' इतिभाष्यकारा निरणैषुः । अनेन चेतनं शरीरमेव भवति ईश्वरश्शरीर्येव भवति चेतनस्तु शरीरं शरीरी च भवतीति विभागो द्रष्टव्यः । स्वस्य भगवच्छेषत्वे सिद्धे स्वसम्बन्धिनां सर्वेषां तच्छेषत्वं कैमुतिकन्यायसिद्धमिति विशेषणं नालिख्यते । पूर्वं तावच्चतुर्थ्यायोगव्यवच्छेदेन सिद्धं शेषत्वम् अन्ययोगव्यवच्छेदेन नियमयत्युकारः । उकारस्यावधारणार्थत्वात् अस्यचावधारणार्थत्वं श्रुतिप्रयोगादेवावगम्यते 'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदुचन्द्रमाः' इत्यादिवाक्येषु एवकारस्थाने उकारस्य प्रयोगात् । अनेन देवतान्तरवर्जनमपि सिद्धं भवति । इदं च देवतान्तरवर्जनं तदीयवर्जनपर्यन्तमेव । तदीयानां भगवति साम्याधिक्यादिविप्रतिभूयस्त्वेनात्यन्तवर्जनीयत्वात् । यथा भगवच्छेषत्वं भागवतशेषत्वपर्यन्तमुपपादयिष्यते । तद्वदिदमपि देवतान्तरवर्जनं तदीयवर्जनपर्यन्तमेव । अत्रच

अनन्यदेवताभक्ता ये मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्तास्ते मद्भक्ताःप्रकीर्तिताः ॥
ब्रह्माणं शितिकण्ठं च याश्चान्या देवतास्स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम् ॥
नचान्यदेवताभक्तिमापत्स्वपि समाचरेत् ।
अवैष्णवनमस्कारादवमानाच्च केशवे ॥
वैष्णवे परिवादाच्च पतत्येव न संशयः ।

इत्यादीन्यनुस्मर्तव्यानि । नच नित्यनैमित्तिकानुष्ठानेषु देवतान्तरसंसर्गप्रसङ्गः तत्रापि तदन्तर्यामिणः परमात्मन एव प्रतर्दनविद्यान्यायेन सर्वकर्मसमाराधनीयत्वात्तासां देवतानां कञ्चुकतुल्यत्वमित्यविरोधः । इदंचावश्यककर्तव्य नित्य नैमित्तिकमात्रविषयमिति नातिप्रसङ्गः । अन्यथा 'ब्रह्म दाशा' इत्यादि वचनेन सर्वेषामपि नन्तव्यत्वप्रसङ्गात् ॥

एवं साधारणं निरूपितस्य शेषत्वस्याश्रयभूतजीवस्वरूपं मकारेण प्रतिपाद्यते । सच मकारः 'मनज्ञाने—मनअवबोधने' इति धातौ अस्मच्छब्दे वा 'माङ्माने—मसपरिमाणे' इत्यत्र वा छान्दसप्रक्रियया लुप्तशेषो ज्ञान स्वरूपं ज्ञानगुणकमतएव प्रत्यग्रूपमणुपरिमाणमेतैरेव हेतुभिर्देहादिविलक्षणं जीवात्मानमाह । अत्रचैव व्युत्पत्तिः । 'मनज्ञाने' इत्यस्माद्धातोः उणादयो बहुळमिति वा, अन्येभ्योऽपि दृश्यत इति वा डप्रत्यये टिलोपे च कृते—म्—अ इति स्थिते 'प्रत्ययस्य बहुलं छन्दसी' इत्यलोपे कृते म्—इति भवति । कृदन्तत्वात्प्रातिपदिकसंज्ञायां प्रथमैकवचने कृते हलादिलोपे च कृते, म्—इत्येवावतिष्ठते । एवं 'मन अवबोधने' इत्यादिष्वपि द्रष्टव्यम् । उक्तंच यामुनाचार्यैः

देहेन्द्रियमनःप्राण धीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मभिन्नस्वतस्सुखी ॥

अनन्यसाधनः स्वयम्प्रकाशः अत्रचायं विभागःप्रतिपत्तव्यः । अहमहमित्यतीतानागतस्वप्नसुषुप्त्यादिसाधारणं यद्ज्ञानं तत्स्वरूपज्ञानमेव । अत्र सुप्तोऽहमीदृशोऽहंवेति सविशेषेणाहमर्थज्ञानं धर्मभूतज्ञानम् । तेन स्वतः परतश्चात्मा स्वस्मै भासते । स्वस्यैवात्र ज्ञातृत्वात् । परतएव परस्मै भासते परज्ञानेनैव परस्य प्रकाशमानत्वात् 'त्वामहं जानामि, त्वं मां जानासि' इत्युभ-

यत्रापि परज्ञानेनैव परःपरस्मै काशते। धर्मभूतज्ञानं नित्यविभूतिश्च स्वतःपरतश्च परस्माएव भासते द्वयोर्ज्ञानरूपत्वान्नित्यविभूतेर्ज्ञानस्य च स्वयम्प्रकाशत्वात्स्वतो भानं स्वरूपमात्रेण तयोस्सिध्यति। जीवगतधर्मभूतज्ञानेन नित्यविभूतेर्नानाविशेषणविशिष्टायाः प्रतिभानात्परतोऽपि ज्ञानेन भानं सिध्यति। स्वगतस्यातीतज्ञानस्य कालान्तरे ज्ञानान्तरेण भानात् तत्रापि परतोभानं परगतस्य ज्ञानस्य परगतज्ञानेन भानाच्च परतोभानम्। अन्यत्सर्वं परतएव परस्माएव भासते प्रकृतिः काल उभयमपि जीवेश्वरगतधर्मभूतज्ञानेन परेण परयोरेव जीवेश्वरयोर्भासतइत्यर्थः। एतत्तु गुणक्रियादिष्वद्रव्येष्वपि समानम् इत्थमेव-प्रकाशमानत्वं पदार्थानामित्याचार्याः॥

एकदेशिनस्तु नित्यविभूतेर्न ज्ञानत्वम्। 'स्वसत्ताभासकं सत्त्वं गुणसत्वाद्विलक्षणम्' इत्येतदप्युज्वलतामात्रेणेत्याचक्षते। तत्तु 'किमात्मिका भगवतो व्यक्तिः। यदात्मको भगवान्। किमात्मको भगवान्। ज्ञानात्मको भगवान्' इति निरूपितवाक्यविरुद्धत्वान्नपरिगृह्यते परैः। यथा सम्प्रदायं यथा प्रमाणं चावगम्यतामधिकनिपुणैः॥

अस्यायमर्थः। आत्मा स्वतः परतश्च स्वस्मै भासमानः धर्मभूतज्ञानं नित्यविभूतिश्च स्वतःपरतश्च परस्मा एव भासते। इतरस्सर्वं परस्माएव भासते आत्मा स्वतःपरतश्च परस्मै भासमानः परतएव परस्मै भासते। धर्मभूतज्ञान नित्यविभूत्योर्विषयित्वतदभावाभ्यां मिथो वैषम्यम्। नित्यविभूतेस्स्वयम्प्रकाशे 'स्वसत्ताभासकं सत्त्वं गुणसत्वाद्विलक्षणम्।' इत्यादिकं प्रमाणजातमनुसन्धेयम्॥

अत्राजडश्श्रुतिरपि। 'किमात्मिका भगवतो व्यक्तिः। यदात्मको भगवान्। किमात्मको भगवान् ज्ञानात्मको भगवान्' इति। व्याप्तीति सर्वाचेतनान्तःप्रवेशसामर्थ्यमेवाभिधीयते। नतु विभुत्वम् 'एषोऽणुरात्मा चेतसा वेदितव्यः। आराग्रमात्रोह्यवरोऽपि दृष्टः' इत्यादिश्रुतेः। भगवच्छास्त्रे ककारादि मकारान्तानामक्षराणां पंचविंशतितत्त्ववाचकत्ववचनात्। 'मकारं जीवभूतं तु शरीरे व्यापकं न्यसेत्' इति साक्षात्कण्ठोक्त्या च मकारस्य जीववाचकत्वं सिद्धम्। अनेन च प्रकृतिपरिणामित्वाद्देहस्य तद्वैलक्षण्यमात्मनउक्तम्भवति; अत्र च 'मकारो जीववाचकः' इत्यादिवचनान्तरमपि स्वयमेवानुसन्धेयम्॥

"ओमित्यात्मानं युञ्जीत" इत्यत्रोक्तात्मशब्दः, मकारस्य जीववाचकत्वे प्रमाणं परिशिष्यते। अयमत्र वाक्यार्थः ज्ञानस्वरूपो ज्ञानगुणकः प्रत्यग्रूपोऽणुपरिमाणः ततएव देहादिविलक्षणश्चाहं सर्वकारणभूताय सर्वरक्षकाय सर्वशेषिणे श्रियःपतयएव स्वाभाविकशेषभूत इत्येकायोजना। अत्राहमिति सर्वेषामात्मनामुपलक्षणम्—

अकारेणोच्यते विष्णुस्सर्वलोकेश्वरो हरिः।
उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा॥
मकारस्तु तयोर्दास इति प्रणवलक्षणम्।

इति योजनान्तरेत्ववधारणमार्थं मन्तव्यम्। एवंचोक्तार्थस्य प्रणवस्याक्षरार्थ वाक्यार्थौ 'मम नाथ' इत्यादि यामुनाचार्यवाक्येऽपि यथास्थानमनुसन्धेयौ। अत्रतु यथास्थानमर्थपंचकं तत्त्वत्रयं च शाब्दमार्थंचावगन्तव्यं बुद्धिमद्भिः॥

एवंचान्यशेषत्वे निवृत्ते तत्प्रतिपादकमध्यमाक्षरविवरणरूपतया स्वस्य स्वशेषत्वादि निवृत्तिमुखेन नमस्सम्बन्धः। मइति मकारे षष्ठी। नेति निषेधः प्रणवतृतीयाक्षरन्त्वनुषज्यते। नमः अहं मम नेति। एवंचाहमपि नममेत्युक्तं भवति। 'आत्मापि चायं नमम' इतिहि वदन्ति॥

ननु कथं स्वस्य शेषत्वप्रसक्तिः। उच्यते–यथाखलु परेषामतिशयाधायकश्शेषः परश्शेषीति व्यवह्रियते। एवं स्वात्मानमलङ्कुर्वाणस्स्वकृतालङ्कार फलाधारतया शेषी स्वालङ्कारकर्तृतया शेषइति व्यवहर्तुमुपाधिभेदाच्च शक्यते। तादृशीमप्याशङ्कां निवारयितुं स्वशेषत्वनिवृत्तिः प्रतिपाद्यते॥

एतदुक्तं भवति। 'स्वस्य स्वेनाप्याधीयमानोऽतिशयो राजदाराद्यलङ्कारवत्परशेषतयैव क्रियते' इति। आहुश्च। 'भुङ्क्ते स्वभोगमखिलं पतिभोगशेषम्' इति। अथवा मध्यमाक्षरएवान्यशेषत्वस्य निवृत्तत्वात्स्वस्याप्यन्यत्वेन स्वशेषत्वमपि गर्भस्रावेण गतमिति किंचिदिति पदान्तराध्याहारेण न मम किंचिदिति स्वसम्बन्धि देहेन्द्रियपुत्राद्यपेक्षया स्वस्य निरुपाधिकशेषित्वमत्र निषिध्यते॥

यद्वा—सर्वेषामपि पदार्थानां भगवच्छेषत्वस्य प्रणवएव स्वतस्सिद्धत्वात्पुत्रादीनामपि स्वापेक्षया स्वाभाविकशेषत्वं प्रागेवार्थतो निषिद्धमिति स्वस्वा

तन्त्र्यादिकमत्र निषिध्यते । नमम कुत्रापि निरपेक्षकर्तृत्वादिकमिति । एवं च सति प्रणवे शेषत्वप्रतिपत्तिः इह पारतन्त्र्यप्रतिपत्तिरिति विभागः ॥

अयं चात्र विशेषो बोद्धव्यः । कारणत्वं तत्त्वत्रयसाधारणम् । कर्तृत्वं जीवेश्वरसाधारणम् । स्वाधीनकर्तृत्वमीश्वरस्यासाधारणम् । पराधीनकर्तृत्वं जीवस्यासाधारणम् । व्यापाराश्रयत्वमात्रंतु कर्तृत्वमचेतनेऽप्युपचर्यते 'रथो गच्छति' इति । एवं च कर्तृत्वं प्रेरकत्वम् । अनुमन्तृत्वमुदासीनत्वम् । साक्षित्वं सहकारित्वम् । फलित्वं फलप्रदत्वम् । इत्येतेऽर्था भगवतः प्रतिपन्नाभवन्ति तत्र जगदुत्पत्त्यादिषु सर्वेष्वपि कार्येषु ज्ञानचिकीर्षाप्रयत्नवत्त्वात्कर्तृत्वम् । कर्तृभूत जीवप्रवर्तकत्वात्प्रेरकत्वम् । स्वकर्मानुरूपंप्रवृत्तानामुत्तरोत्तरं प्रवर्तकत्वादनुमन्तृत्वम् एतेष्वेव स्वकर्मानुरूपेषु सुखदुःखादि कार्येषु बीजानुगुणमुत्पद्यमानेष्वङ्कुरेषु जलस्येव सामान्यकारणत्वे सम्भवत्यपि विशेषकारणत्वाभावादुदासीनत्वम् । सर्वसाक्षाद्द्रष्टृत्वात्साक्षित्वम् । सामग्र्यनुप्रविष्टैश्चेतनाचेतनात्मकैस्सहकारिवर्गैस्सह स्वयमेव सर्वकार्यकर्तृत्वात्सहकारित्वम् । सर्वशेषित्वेन सर्वस्यापि फलस्य भृत्यसंरक्षणादिन्यायेन स्वपर्यवसानात्फलित्वम् । 'फलमत उपपत्तेः' इत्युक्तप्रक्रियया सर्वकर्मसमाराधनीयस्य स्वस्यैव साक्षात्सर्वफलहेतुत्वात्फलप्रदत्वमिति । सर्वमप्येतद्गुणजातमाकारभेदादेकस्मिन्नेव भगवति योयुज्यत इति हृद्यं निरवद्यं च ॥

एवं च सर्वदा सर्वप्रेरकस्यापीश्वरस्य उपेक्षकत्वानुमन्तृत्वादिवचनानां तत्तदाचार्यग्रन्थेषु दृष्टानां विरुद्धवत्प्रतिभासमानानां स्वयमेवाविरोधो बुद्धिमद्भिर्बोद्धव्य इत्यस्माभिरुपरम्यते ॥

ननु कथं शेषत्वात्पारतन्त्र्यमतिरिच्यते ? इत्थं यथेष्टविनियोगार्हत्वं शेषत्वम् । यथेष्टविनियुज्यमानत्वं पारतन्त्र्यमिति । आहुश्च—

यथेष्टविनियोगार्ह शेषशब्देन कथ्यते ।
ईश्वरेण जगत्सर्वं यथेष्टं विनियुज्यते ॥

इति । एवं शेषत्वदासत्वयोरपि मात्रया भेदोऽनुसन्धेयः । परगतातिशयाधानेच्छयोपादेयस्वरूपत्वमेव शेषत्वम् । शेषत्वप्रतिपत्त्यर्हत्वेसति तदेव शेषत्वं दासत्वमित्यभिधीयते । ततश्च चेतनाचेतनसाधारणं शेषत्वम् । चेतनैकान्तं

दासत्वमित्यलमतिविस्तरेण । एवं पारतन्त्र्ये प्रतिपन्ने भगवत्परतन्त्रतया शिक्षितस्वरूपस्य शेषभूतस्य चेतनस्य यथाधिकारं भगवत्प्रवर्तितेन केनाप्युपायेन तद्वशीकरणस्य कार्यत्वाद्भगवन्मूला शरणागतिरप्यर्थसिद्धा ॥

भागवतःशेषत्वमापि ततएवार्थसिद्धं भवति । यथाखलु राजानः प्रियतमेषु पुत्रादिषु स्वशेषभूतं सकलमपि स्वेच्छयैव शेषतया विनियुंजते । एवं भगवच्छेषत्वपारतन्त्र्याभ्यां भगवतैव यथेष्टं विनियुज्यमानस्य भागवतशेषत्वमपिसिद्धं भवति ॥

अभिमतं खलु भगवच्छेषत्वादपि भागवतशेषत्वं भगवतएव । अत्रच–

मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत् ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥
आराधनानां सर्वेषां विष्णोराराधनंपरम् ।
तस्मात्परतरं प्रोक्तं तदीयाराधनं परम् ॥

इत्येवमादीनि पठ्यानि । अत्र भागवतशब्देन भगवच्छेषत्वज्ञानरसिकाः परमैकान्तिनोऽभिधीयन्ते । न केवलमीशेशितव्यज्ञानवन्त इति नातिप्रसङ्गः । तेन भागवतशेषत्वपर्यन्तभगवच्छेषत्वज्ञानरसिकाः परमैकान्तिनो भागवताइत्युक्तम्भवतीति सर्वं रमणीयम् ॥

अतस्सूक्ष्मयोजनायां स्वस्य स्वशेषत्वनिवृत्तिः, स्वापेक्षयाऽन्येषां स्वाभाविकशेषत्वनिवृत्तिः, स्वस्वातन्त्र्यनिवृत्तिः, साध्योपायविशेषप्राप्तिः, भागवतशेषत्वंचेत्येते पंचाप्यर्थाः प्राधान्येन प्रतिपाद्यन्ते । अन्येऽपि तदनुषङ्गिणोऽप्यर्थास्स्वयमेव प्रतिपत्तव्याः । स्थूलयोजनायांतु नम इति शरणागतेर्वचनम् । 'गच्छध्वमेनं शरणं शरण्यं पुरुषर्षभाः ।' इति शरणागतिविधाने 'द्रौपद्या सहितास्सर्वे नमश्चक्रुर्जनार्दनम्' इति नमसः प्रयोगादात्मभरसमर्पणे नमसः प्रयोगो युज्यतएव । 'नमश्शब्दःप्रदानार्थस्वाहाशब्दइवेष्यते ।' इति वचनाच्च । एवं स्वरूपसमर्पणं प्रणवे, भरसमर्पणं नमसीति भिदा । इदं च भरसमर्पणं 'मामेकं शरणं व्रज' इति विधीयते । स्वरूपसमर्पणं तु तत्वज्ञानसम्पादनान्तर्गतत्वात् । 'अथवा किन्नु समर्पयामिते' इति कृतमपि प्रतिषिध्यते अतो न भरसमर्पणप्रतिषेधः । फलसमर्पणं पश्चाद्भविष्यति । तथाच

शरणागतिस्वरूपप्रतिपादकं नमःपदमिति स्थूलयोजनायां निर्वाहः। परयोजनायां तु प्रधानोपायभूतो भगवानेव नमःपदेन प्रतिपाद्यते। उक्तं च—

पन्था नकार उद्दिष्टो मःप्रधानउदीर्यते।
विसर्गःपरमेशस्तु तस्यार्थोऽयं निरूप्यते॥
अनादिःपरमेशस्तु शक्तिमानच्युतःप्रभुः।
स्वप्राप्तये प्रधानोऽयं पन्था नमननामवान्॥

इति एवं त्रिभिर्योजनाभेदैर्भगवदपेक्षया जीवस्य पारतन्त्र्यादिकं साध्योपायभूता प्रपत्तिः, सिद्धोपायभूतो भगवांश्च प्रतिपाद्यते। अत्राप्यर्थपञ्चकं तत्त्वत्रयं च यथास्थानमनुसन्धेयम्॥

तृतीयपदन्तु अकारवाच्यमेव नारायणं नेतृत्वादिमुखेन विशदयितुं मकारवाच्यं जीवं नित्यत्वादिमुखेन विशेषतःप्रतिपादयितुं नमःपदे प्रतिपन्नासिद्धोपायस्वरूपं यथावदवबोधयितुं प्रवृत्तं सत् पूर्वोक्तस्य साध्योपायस्य फलभूतं भगवन्तं भगवदनुभवजनितप्रीतिकारिताशेषावस्थोचिताशेषशेषवृत्तिरूपकैङ्कर्यात्मकं च साध्यफल प्रकाशयति। 'नृनय' इति धातावच्प्रत्यये कृते नरशब्दस्य व्युत्पत्तिः। तथा च भगवतः सर्वनेतृत्वमुक्तम्भवति। 'जह्नुर्नारायणो नरः' इति भगवद्वाचकोऽयं शब्दः॥

अथवा 'रिङ्क्षय' इति धातौ डप्रत्ययमुत्पाद्य रइति व्युत्पन्ने सति नगनैकादिशब्दवन्नसमासे कृते नर इति भवति। तथा च भगवद्वाचकत्वं सिद्धं भवति। चेतनाचेतनयोस्स्वभावस्वरूपाभ्यामन्यथाभावेन क्षयिष्णुत्वमस्ति। ईश्वरस्य तदुभयाभावान्नरत्वं युज्यते। एवं च नरसम्बन्धिनो नारा इति वा 'नराज्जातानि तत्त्वानि नाराणीति ततो विदुः' इति वा तद्धितप्रत्ययमुत्पाद्य चेतनाचेतनं विश्वं नारशब्देनाभिधीयते। एवं स्वभावान्यथाभावे सत्यपि स्वरूपान्यथाभावाभावान्नरशब्देन जीव उच्यते। तत्सङ्घाता नाराः सङ्घातस्य बहुत्वाद्बहुवचनमाचार्यैरभिधीयते॥

एवं च नारशब्देव्युत्पन्ने ल्युडंतेनायनशब्देनसह समासो द्विविधः। बहुव्रीहिस्तत्पुरुषश्चेति। यदा तत्पुरुषस्तदा नाराणामयनमिति विग्रहः। यदा बहुव्रीहिस्तदा नाराण्ययनानि यस्येति विगृह्यते। ल्युडन्तोऽयमयनशब्दःकरणं,

कर्म अधिकरणंचाप्याह । अनेनैवायमेवास्मिन्नेव नारैरिष्यतइति । अत्रचायनशब्दं व्युत्पादयति। 'इण्गतौ' इतिधातोः 'करणाधिकरणयोश्च' इति विहितस्य ल्युप्रत्ययस्य 'युवोरनाकौ' इत्यनादेशे कृतेसति गुणायादेशयोः कृतयोरयनमिति सम्पद्यत इति ॥

अथवा 'अयपयगतौ' इत्यत्र व्युत्पन्नो द्रष्टव्यः । तथा च तत्पुरुषसमासे भगवन्तं नाराणामयनमिति नारायणं जीवानामुपायमुपेयं धारकं च प्रतिपद्यामहे । बाहुळकाल्लिङ्गव्यत्ययः अचेतनानां पुनराधारत्वमेव । उपायोपेयत्वयोश्चेतनविषयत्वात् । बहुव्रीहौ तु नारं चेतनाचेतनात्मकं विश्वं यस्यायनं व्याप्यं संस्थानं वेति विग्रहात्सर्वव्यापकत्वं सर्वान्तर्यामित्वं च भगवत इत्युक्तम्भवति ॥

द्विविधंखलु भगवतोऽन्तर्यामित्वम् । परव्यूहविभवान्तर्याम्यर्चावतार प्रक्रियया हृत्पुण्डरीकमध्यवर्तिना विग्रहेण कश्चित्प्रकारः । अयमेव 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' इत्यादि श्रुत्या च प्रतीयते । प्रकारान्तरन्तु चेतनाचेतनविभागाभावेन सर्वेष्वपि वस्तुषु प्रेरकतया भगवत्स्वरूपस्य सन्निहितत्वम् । इत्थं द्विविधमप्यन्तर्यामित्वं भगवतश्श्रीनिवासस्य 'शान्तानन्त' इत्यादिना प्रतिपन्नस्वरूपस्य वासस्थानवाचिनाऽयनशब्देन बहुव्रीहौ विवक्ष्यते। अर्थान्तराण्यपि बहूनि विद्यमानानि विस्तरभयादत्र न लिख्यन्ते ॥

अयमत्र विभागः । प्रणवे रामानुजमिति भगवच्छरीरभूतस्वात्मप्रतिपादनम्। नारायणपदे बहुव्रीहौ स्वात्मशरीरकपरमात्मप्रतिपादनम् । तत्पुरुषे तु स्वाधारादिरूपपरमात्मप्रतिपादनम् । अत्र च 'लक्ष्मणपूर्वजम्' चेति वचन दृष्टान्ततया अनुसन्धेयमिति ॥

इदंचात्र बोध्यम् । शरीरात्मभावलक्षणेषु आधेयत्वविधेयत्वशेषत्वेषु शेषत्वं प्रणवे, विधेयत्वं नमसि, आधेयत्वं नारायणपदे इति । अयनशब्देऽप्यधिकरणव्युत्पत्त्या भगवतस्सर्वाधारत्वं प्रतिपाद्यत इति पूर्वमेव प्रत्यपादि ॥

अत्रचोक्तमिदमनुसन्धानद्वयं वेदान्तेष्वपि दृश्यते । परमात्मशरीरभूत स्वात्मानुसन्धानेन स्वशरीरकपरमात्मानुसन्धानेन च ब्रह्मविद्याविभागस्य भाष्यकारैरेव प्रतिपादितत्वात् । नारायणपदस्थचतुर्थीविभक्त्या तादर्थ्यस्य प्रणव एव सिद्धत्वात्तादर्थ्यफलभूतं सर्वदेश सर्वकाल सर्वावस्थोचितसर्वविधकैङ्कर्य

प्रार्थ्यते । न खल्वकिंचित्करस्य शेषत्वं युज्यते । 'नाकिंचित्कुर्वतश्शेषत्वम्' इति हि तान्त्रिकाः ॥

अत्र फलदशायामनुभवकैङ्कर्ययोः स्वाधीनभोक्तृत्वं स्वार्थभोक्तृत्वं स्वाधीनकर्तृत्वं स्वार्थकर्तृत्वमित्येवंरूपस्य विरोधिनः पुरुषार्थान्तरेषु दृष्टप्रसङ्गस्य निराकरणाय प्रणवनमसोरिवाक्षित भगवच्छेषत्वं तत्पारतन्त्र्यं चानुसन्धेयम् ॥

अतएव शरणागतिमन्त्रोत्तरखण्डे नमश्शब्दः प्रयुज्यते । वाक्यार्थस्तु अकारवाच्यनारायणायैवाहं शेषभूतः नममेति श्रीमदष्टाक्षरस्य कार्त्स्न्येन स्वरूपपरत्वमित्येका योजना । अपरा तु प्रणवस्यैव स्वरूपपरत्वं द्वितीयतृतीयपदयोरनिष्टनिवृत्तिप्रार्थनायामिष्टप्राप्तिप्रार्थनायां च तात्पर्यमिति ॥

तत्र वाक्यार्थः । अकारवाच्याय श्रियःपतय एवाहं शेषभूतः । नमम किंचित्स्यात् नारायणायैव कैङ्कर्यं भवेदिति । तथा योजनान्तरमपि प्रणवनमसोस्स्वरूपपरत्वं तृतीयपदस्य पुरुषार्थपरत्वमिति तत्र पूर्वेषामेकःश्लोको लिख्यते

अकारार्थायैव स्वमहमथमह्यं ननिवहा
नराणां नित्यानामयनमिति नारायणपदम् ।
यमाहास्मैकालं सकलमपि सर्वत्र सकला-
स्ववस्थास्वाविस्युर्ममसहजकैङ्कर्यविधयः ॥

इति । वेदान्ताचार्यैस्तु वेदान्तक्रमेण तत्त्वहितपुरुषार्थात्मकास्त्रयोऽप्यर्थाः पदत्रयेण क्रमेणात्र प्रतिपाद्यन्त इत्यभिधीयन्ते । सर्वकारणभूताय सर्वरक्षकाय सर्वशेषिणे श्रियःपतय एवाहमनन्यार्हनिरुपाधिकशेषभूतः तच्चरणारविन्दयोरेवात्मात्मीयभरं न्यस्यामीति । नारायणायैव सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविधकैङ्कर्याणि स्युरिति । एवंखलु तैरुक्तम्–

इत्थं सङ्घटितःपदैस्त्रिभिरसावेकद्विपञ्चाक्षरैः
अर्थैस्तत्त्वहितप्रयोजनमयैरध्यात्मसारैस्त्रिभिः ।
आद्यस्त्र्यक्षरवेदसूतिरजहन् स्थूलादिवृत्तित्रयः
त्रैगुण्यप्रशमं प्रयच्छतिसतां त्र्यन्तसारो मनुः ॥

इति । अत्र अर्थपंचकानुसन्धानमपि नारायणपदे मन्त्रे च सर्वत्राप्यनुसन्धेयम् उक्तं तदप्याचार्यतातपादैः–

आदौ प्राप्यं परममनघं प्राप्तृरूपंच मादौ
इष्टोपायन्त्वयनननमसोरीप्सितार्थं चतुर्थ्याम् ।
तत्राघातं ममकृति गिरिव्यञ्जयंतं मनुन्तम्
तत्प्रायं च द्वयमपि विदन् सम्मतस्सर्ववेदी ॥

इति । इह च अयनशब्देन सिद्धोपायः प्रतिपाद्यते । नमसातु साध्योपायः पर योजनायां सिद्धोपायश्च । एवं तेनैवायनशब्देन सिद्धप्राप्यं चतुर्थ्यातु साध्यप्राप्यमिति विभागः ॥

अत्र च प्रणवार्थस्वरूपविवरणतया प्राचीनैरपि विरचितं पद्यं पठ्यम्—

अकारार्थो विष्णुर्जगदुदयरक्षाप्रलयकृत्
मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् ।
उकारोऽनन्यार्हं नियमयति सम्बन्धमनयोः
त्रयीसारस्त्र्यात्मा प्रणवइममर्थं समदिशत् ॥

इति तदुपकरणं वैष्णवमिति स्वस्य भगवच्छेषत्वे प्रतिपादिते स्वकीयस्यार्थस्य भगवच्छेषत्वमर्थादेव सिद्धमित्येषा दिक् ॥ विस्तरस्तु श्रीमद्रहस्यत्रयसारादि परिश्रमशालिनां सुलभ इत्यत्रोपरम्यते इति सर्वं रमणीयम् ॥

श्रीमदष्टाक्षरस्यार्थं श्रोतॄणां प्रतिपत्तये ।
प्राचीकशदविस्तारं त्रैयन्ताचार्यनन्दनः ॥

इति विश्वामित्रकुलोद्भूतेन निखिलकवितार्किकचूडामणिना

सर्वतन्त्रस्वतन्त्रेण श्रीमद्वरदनाथापरनाम्ना

कुमारवेदान्ताचार्येण विरचिते

श्री म द्र ह स्य त्र य सा रा र्थ सं ग्र हे

मूलमन्त्राधिकारःप्रथमः



श्रीमते निगमान्तमहागुरवे नमः

# अथ द्वयाधिकारः

शरणागतिमन्त्रस्य व्याख्या प्रारभ्यतेऽधुना ।
विश्वामित्रकुलोद्भूत वरदार्येण धीमता ॥

इत्थं श्रीमदष्टाक्षरेण शिक्षितस्वस्वरूपस्याधिकारिणः कर्तव्यमुपायम् अनुष्ठेयार्थप्रकाशनमुखेन विशदीकुर्वन् सिद्धोपायभूतस्य भगवत उपायोपेयावस्थयोः उपयुक्तविशेषणभूत सहधर्मचारिणीसम्बन्धमपि प्रख्यापयन् शरणागति मन्त्रः मूलमन्त्रार्थविशदीकरणाय व्याख्यायते । एतस्य मन्त्रस्य मूलमन्त्रव्याख्यानरूपत्वमर्थस्वभावात् भगवच्छास्त्रे मूलमन्त्रानुबन्धी शरणागतिमन्त्र इत्युपपादनाच्च अवगम्यते । अयं च मन्त्रः पूर्वोत्तरखण्डाभ्यामुपायोपेयात्मकार्थद्वयप्रकाशकत्वात् द्वयमित्याचार्यैरभिधीयते । अस्य च माहात्म्यं भगवच्छास्त्रे विस्तरेणानुसन्धेयम् ॥ तत्र श्रीशब्देन—

शृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत ।
श्रीयतेचाखिलैर्नित्यं श्रयते च परम्पदम ॥

इत्यादिप्रमाणबलादाश्रितदोषान्निवारयन्ती, तद्गुणांश्च परिपक्वयन्ती पुरुषकारत्वेन तैराश्रीयमाणा तत्संरक्षणार्थं तमेव भगवन्तमाश्रित्य स्वयमपि सहधर्मचारिणीभवन्ती लक्ष्मीरभिधीयते । शृणोति श्रावयतीति च श्रीशब्दार्थो निरुच्यते । आश्रितानामार्तनादं स्वयमपि श्रुत्वा तत्संरक्षणार्थं तमेव भगवन्तं श्रावयन्तीत्यर्थः । अत्रोपायभूतस्य भगवतो विशेषणत्वेन पूर्वमपि पुरुषकारभूताया लक्ष्म्याः स्वीकारे नोपायद्वित्वप्रसङ्गः । विशेषणविशेष्ययोस्स्वरूपभेदेऽपि विशिष्टस्यैकत्वात् । विशेष्यस्यैव प्रधानत्वाच्च ॥

यथाखलूत्तरखण्डे लक्ष्म्या विशेषणत्वस्वीकारेऽपि नोपेयद्वित्वमिति भवन्तोऽप्यनुमन्यन्ते । तद्वत्पूर्वखण्डेऽपि नोपायद्वित्वम् । अत्र मतुपा नित्ययोगादिकमभिधीयते । नखलु सर्षपमात्रेणापि भगवत्स्वरूपस्य कदाचिदपि कुत्रापि सहधर्मचारिणीवैधुर्यं प्रमाणपदवीमधिरोहति ॥

अतएव निश्रीकब्रह्मवादनिरासः । ब्रह्मणः श्रीनिवासत्वेनैवहि परस्य ब्रह्मणः स्वरूपविशेषप्रतिपत्तिः भाष्यकारैरेव निर्णीता । ' यथा सर्वगतो विष्णुः

तथैवेयं द्विजोत्तम ' ' विष्णोरेषाऽनपायिनी ' ' अनन्या राघवेणाहं भास्करेण प्रभा यथा ' ' त्वयाच विष्णुनाचाम्ब जगद्व्याप्तं चराचरम् ' ' शान्तानन्तमहाविभूतिपरमं यद्ब्रह्मरूपम ' इत्यादिकं प्रमाणशतमनुसन्धेयम् ॥

नारशब्देन समाश्रितसंरक्षणोपयुक्तगुणाः प्रख्याप्यन्ते । तेच कारुण्य स्वामित्व सौशील्य वात्सल्य सौलभ्यज्ञानशक्त्यादयः । तेषांच गुणानां नार शब्दवाच्यत्वम् । नरशब्दवाच्येन भगवता सम्बन्धात् तेषामयनं तदाधारइत्यर्थः । कृत्स्नस्यापि प्रपञ्चस्य नारशब्दवाच्यत्वेसत्यपि तावन्मात्रोपादानं रक्षणौपयिकगुणतयेति मन्तव्यम् ॥

तेषां स्वरूपं प्रदर्श्यते । स्वार्थनिरपेक्षा परदुःखनिराचिकीर्षा दया । येतु परदुःखदुःखित्वं दयेति वर्णयन्ति तन्मते निखिलहेयप्रत्यनीकतया निरूपितस्वरूपस्य भगवतः दुःखप्रसङ्गाभावेन दयास्वरूपमेवोच्छिद्यते । ' व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ' इत्यादिकं समाश्रितानां स्वस्मिन्ननुराग विशेषसिद्ध्ये दुःखित्वाभिनयमात्रमेवेति सर्वाचार्याणां निर्वाह इति प्राचीनमेव दयालक्षणं भाष्यकाराभिमतमिति मन्तव्यम् ॥

दयाऽन्येषां दुःखासहनं ' दया परव्यसनहरा ' इत्यादिकमत्रैव संवादः स्वामित्वं, सर्वशेषित्वम् । तच्च प्रागेवोक्तम् । सौशील्यं महतो मन्दैस्सह नीरन्ध्रसंश्लेषः । वात्सल्यं समाश्रितविषये दोषादर्शित्वम् । उक्तंहि ' यतो दोषं भक्तेष्विहवरदनैवाकलयसि ' इति । सर्वज्ञस्य भगवतो दोषादर्शनवचनं तद्दर्शनस्यापि तन्निवारणोपयुक्तत्वज्ञापनार्थमिति न कश्चिद्विरोधः ॥

येत्वाश्रितदोषभोग्यत्वं भगवतो वात्सल्यमिति लक्षणमभिदधते तेषां भगवदपचार भागवतापचारासह्यापचाराणामुत्तरोत्तरं प्रवर्तनाभिसन्धिरेव तादृश व्यवहारकारणमिति मूर्खपरिगृहीतोऽयं वादः । तस्माद्भगवद्भागवताचार्यापचार भीरुरेव भागवतलक्षणपरिपूर्तिमानिति मन्तव्यम् । तस्माद्बुद्धिपूर्वापचारः परिहर्तव्यएव प्रपन्नाधिकारिभिः । तेन केषांचिद्दोषभोग्यत्ववचनं भागवतविषये भगवत्स्नेहातिशयप्रदर्शनार्थम् । अबुद्धिपूर्वापचारविषयत्वेतु तदश्लेषस्य सौत्रत्वात् यथाकथं चिदभिधीयताम् । सौलभ्यमाबालगोपालं प्रसिद्धम् । ज्ञान शक्त्यादयोऽपि प्रसिद्धाएव । अत्र कश्चिदाह यदि भगवत्कृपायास्स्वाभावि-

कत्वं कथमस्य संसारानुवृत्तिः। परदुःखनिराचिकीर्षारूपत्वात्तस्याः यदिचौपाधिकत्वं कथं निर्हेतुकत्वं तस्याः भावत्कैरुद्घुष्यत इति। अत्र वदामः। नहि वयं तस्यास्सर्वदा निर्हेतुकत्वं ब्रूमः। नापि सहेतुकत्वम्। अपित्वाकारभेदेन निर्हेतुक सहेतुकपक्षसमुच्चयेन सर्वमप्यर्थमुपपादयामः॥

तथाहि—नित्यसिद्धायास्तस्याहेत्वपेक्षायां नित्यत्वस्यैव व्याघातात्। सामान्यतःपरदुःखनिराचिकीर्षा(रूपिणी)भगवत्कृपा तावन्निर्हेतुका। तथाऽपि तस्याः कार्योत्पादनानुकूलस्संस्तवस्सहेतुकः। यथा खलु सर्वकार्यहेतोर्भगवतो नित्यत्वेऽपि तत्सहकारिसमवधानक्रमेण कार्योत्पादनक्रमस्सङ्घटते। एवं नित्यरूपा भगवत्कृपा स्वयमवसरं वीक्षमाणा स्वाधीनसहकारिसमवधानेन सर्वं रक्षतीति मन्तव्यम्। उक्तंचाचार्यैरेव —

मुकुन्दकरुणां वन्दे मुग्धेष्वधिकवत्सलाम्।
स्वरूपसंस्तवौ यस्या निर्हेतुकसहेतुकौ॥

इति। अयमर्थः भगवत्कृपा तावन्नित्यसिद्धा। 'अमुमहमिदानीं संरक्षाणि' इति सङ्कल्पविशेषरूपा कादाचित्कदया कारणविशेषमपेक्षते। तच्च कारणं भगवत्सङ्कल्पान्तरायत्तम्। सच सङ्कल्पस्तेनैव कादाचित्कत्वेन कारणविशेषमपेक्षत इति अनादिरयं प्रवाहस्सर्वैरपि सैद्धान्तिकैरपर्यनुयोज्यः। अतएव वैषम्यनैर्घृण्यादिकं परिह्रियते॥

एवं भगवत्कृपास्वरूपस्य नित्यसिद्धत्वान्न हेत्वन्तरापेक्षेति निर्हेतुकत्वम्। तस्याएव कृपायाः प्रवृत्तिविशेषकार्यत्वात्कारणविशेषमपेक्षत इति प्रवृत्तिविशेषापेक्षया सहेतुकत्वं कादाचित्कत्वात्तस्य हेतुवैधुर्ये तदेव कादाचित्कत्वं व्याहन्येत। स्वभाववादपरिग्रहेतु सर्वशास्त्रव्याकोपः सार्वत्रिको व्याघातश्च प्रसज्येत। अतः कृपायास्स्वरूपे निर्हेतुकत्वम्। संस्तवेतु सहेतुकत्वम्। अनयैव दिशा परस्परविरुद्धवदवभासमानानां प्रमाणवचसां प्रामाणिकाचार्यवचसांच अविरोधःप्रतिपत्तव्य इति। अत्र चरणशब्देन दासस्य स्वामिविषये चरणग्रहणमेव समुचितमिति प्रकाश्यते। नखलु राजभृत्या राजानं करग्रहणेन स्वाभिलषितार्थं प्रार्थयन्ते। अनतिलङ्घनीयं हि विशेषेण चरणग्रहणमित्यर्थोऽत्र भावनीयः। तथा च "नजातुमातुश्चरणौ जिहासति" इति यामुनाचार्यैराभिहितम्॥

किंच मातुर्हृद्यावयवान्तरेषु सत्स्वपि स्तनन्धयस्य पुत्रस्य स्तनयोरुपजीव्यत्वम् । एवं शरणागतस्य भगवच्चरणारविन्दयोरेव भोग्यत्वमिति इममर्थं प्रकाशयति चरणशब्दः । श्रूयतेहि ' विष्णोःपदे परमे मध्वउत्सः ' इति । अत्र चरणशब्देन उपायत्वमभिधीयते —

उपाये गृहरक्षित्रोश्शब्दश्शरणमित्ययम् ।
वर्तते साम्प्रतंत्वेष उपायार्थैकवाचकः ॥

इति वचनात् । अत्र चरणयोरुपायत्वाभिधानं चरणविशिष्टस्य भगवत उपायत्वे पर्यवस्यतीति अयंच न्यायः उपायविशेषणतयोपादीयमानेषु गुणेष्वपि तुल्य इति मन्तव्यमन्तेवासिभिः । अतोऽत्रापि नोपायद्वित्वप्रसङ्गः । अत्र नित्यान्वयि विशेषणम् । कादाचित्कमुपलक्षणम् । यथा ' प्रकृष्टप्रकाशश्चन्द्रः ' ' काकवद्देवदत्तस्य गृहम् ' इति, तेनात्र श्रीमच्छब्दानुपात्तानामर्थानां विशेषणत्वमेव सर्वेषां तेषां कार्यान्वयित्वात् । प्रपद्यइति महाविश्वासोऽभिधीयते । प्रशब्देन प्रकर्षाभिधानात् ' पद्लृगतौ ' इति धातोर्गत्यर्था बुध्यर्था इति न्यायेन बुद्धेरभिधानात् बुद्धेश्चाध्यवसायरूपतया विश्वासपर्यवसानाच्च ॥

एतदुक्तम्भवति । भगवच्चरणारविन्दयुगलं शरणमध्यवस्य प्रार्थनापूर्वकं भरं न्यस्यामीति न्यासस्यापि बुद्धिरूपत्वात्प्रपद्य इति न्यास एवात्राभिधीयते । केवलं विश्वासाभिधानमात्रे ' न्यासःपञ्चाङ्गसंयुतः ' ' आत्मात्मीयभरन्यासो ह्यात्मनिक्षेपउच्यते ' तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ' इत्यादिप्रमाणानन्वयः प्रसज्येत । ' विश्वासो द्वयार्थः ' इत्याचार्यवचनस्यापि भरन्यासपर्यन्त विश्वासे तात्पर्यम् । अन्यथा ' तवभरोऽहमकारिषिधार्मिकैश्शरणमित्यपि वाचमुदैरिरम् ' इत्यादिवचनं विरुध्येत ॥

एवं च प्रपद्यइति शब्दः प्रकृष्टज्ञानरूपं भरन्यासमेव प्राधान्येन प्रकाशयतीति केचित् । तथा च स्वेनवा स्वाचार्येणवा स्वरक्षणविषयभरन्यासः कर्तव्यइत्युक्तं भवति । उत्तमपुरुषेण प्रपदनकर्तृपुरुषविशेषाभिधानात् अधिकाररूपमाकिञ्चन्य तत्प्रकाशात्मकं कार्पण्याभिधानमङ्गं च प्रतिपाद्यते । अतः प्रातिकूल्यवचनम् आनुकूल्यसङ्कल्पश्च श्रीशब्देन प्रतीयते । महाविश्वासस्सोपसर्गधातौ तत्रैवार्थाच्छब्दाद्वा गोप्तृत्ववरणं भरन्यासश्च सिध्यति । गोप्तृत्ववरण

भरन्यासयोरपि प्रकृष्टबुद्धिविशेषरूपत्वात् । उत्तमपुरुषे कार्पण्यमाकिञ्चन्यं च 'नधर्मनिष्ठ' इत्यादियामुनाचार्यवचनेन तस्यैव विवरणात् । अतः पूर्वखण्डे साधिकारसाङ्गप्रपदनसिद्धिः । अत्र च श्रीमन्नारायणशब्दाभ्यां शङ्कापंचक हेतवः पंचापि प्रतिक्षिप्यन्ते । तदुक्तमाचार्यैः—

कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति
ब्रह्मेशादिसुदुर्लभं पदमपि प्राप्यं मया द्रागिति ।
विश्वासप्रतिबन्धिचिन्तनमिदं पर्यस्यति न्यस्यताम
रङ्गाधीशरमापतित्वसुभगं नारायणत्वं तव ॥

इति । श्रियःपतित्वसंवलितैर्भगवद्गुणैश्शङ्का हेतवो निरस्यन्त इत्यर्थः ॥

तथाहि भगवतः परमकारुणिकत्वात्प्रपदनोपायस्य सकृत्त्वं नदोषाय । स्वार्थनिरपेक्षपरदुःख निराचिकीर्षाहि कृपेत्यभ्यधायि । स्वामित्वात्स्वशेषभूतानस्मान् स्वयमेव संरक्षितुमर्हति । सुशीलत्वादसन्मान्यं नालोकयति । महतो मन्दैस्सह नीरन्ध्रसंश्लेषोहि सौशील्यमिति चोक्तम् । वत्सलत्वादस्मद्दोषमपि नपश्यति । स्वतस्सर्वज्ञस्य भगवतो दोषानवलोकनवचनं तदवलोकनं तन्निवारणायैव भवतीति ज्ञापनार्थमिति च पूर्वमेवोक्तम् । आश्रितविषये सुलभत्वाद्दुर्लभत्वमपि नास्ति । दृश्यतेहि—'अतिदूरमभक्तानां भक्तानां पुरतस्स्थितम्' इति । एवमौदार्यसर्वज्ञत्वादीनामपि गुणानामुपयोगो द्रष्टव्यः । एतेच सर्वेगुणाः श्रियःपतित्वेनोत्तभ्यमानाः समाश्रितसंरक्षणाय प्रभवन्तीत्यर्थः एवं पूर्वखण्डे त्रीणि पदान्यनुसन्धेयानि ।

श्रीमन्नारायणस्वामिन्ननन्यशरणस्तव ।
चरणौ शरणंयातस्तवैवास्म्यहमच्युत ॥

इति द्वयविवरणरूपभगवच्छास्त्रवाक्यानुरोधेन श्रीमन्नारायणशब्दयोस्सम्बुध्यन्तत्वमाश्रित्य तवेति पदमध्याहृत्य च केचिन्निर्वहन्ति । अर्थतत्त्वंतु सर्वत्राप्येकमेव । पूर्वखण्डे सपरिकरमुपायं प्रतिपाद्य उत्तरखण्डेन तत्फलमभिधीयते । तत्रापि श्रीमच्छब्दार्थः पूर्ववद्व्याख्येयः । नारायणशब्देन गुणविग्रहविभूत्यादि विशिष्टं परं ब्रह्म प्रतिपाद्यते । कृत्स्नस्यापि भगवद्विभूतिभूतस्य चेतनाचेतनात्मकप्रपञ्चस्य तद्विशेषणत्वेन भोग्यत्वान्नरसम्बन्धितया नारशब्दवाच्यत्वाच्च । यथा

खलु पित्तोपहतस्य तिक्ततया भातं क्षीरं तदपगमे मधुरमेव प्रतिभाति । तथा कर्मवशात्प्रागन्यथाप्रतिपन्नं विश्वं तन्निवृत्तौ भगवद्विभूतित्वे सुखायैव भवतीति किन्नाम न योयुज्यते ॥

अतएव खलु असंकुचितब्रह्मानुभवो मोक्ष इत्यभिधीयते । अत्रापि श्रीमन्नारायणशब्दस्थया चतुर्थ्याऽपि शेषत्वपुरस्कारेण कैङ्कर्यमेव प्रतिपाद्यते । नम इति ममकारनिषेधेन फलदशायां स्वाधीनकर्तृत्वं, स्वार्थकर्तृत्वं स्वाधीनभोक्तृत्वं स्वार्थभोक्तृत्वं चेतिविरोधिचतुष्टयं निषिध्यते । अयं च निषेधस्स्वर्गादिन्यायेनात्रापि तादृशदोषमाशङ्कमानंप्रति बोधनायेति न कश्चिद्विरोध इति प्रागेवोक्तम् । नखलु मोक्षदशायामेतादृशदोषाः प्रतिबुद्धैराशङ्कितुमपि शक्यन्ते कथं तर्हि भक्तानामस्थानभयशङ्कादिकं ज्ञानकार्यादिकमभिधीयते ॥

मैवं नहि तत्र साक्षाद्भयादस्थानभयशङ्कोच्यते । अपित्वस्थानभयशङ्कि नामाप्तमानां किङ्कराणां स्वामिविषये यादृशः प्रेमातिशयः तादृशप्रेमातिशयो मुक्तानां भगवद्विषयइत्यतो जयजयेत्यादिवचनं किङ्करवृत्तिमात्रविषयमेवेति न कश्चिद्विरोधः । तस्मादुत्तरखण्डस्याध्याहृत निरपराधकैङ्कर्यलाभो वाक्यार्थः । भगव(द्गुणानु)दनुभवश्च तदन्तर्गतएव । भगवद्गुणानुभवजनितत्वात्कैङ्कर्यसंतानस्य । अत्र पूर्वखण्डे एकं वाक्यम् ॥

उत्तरखण्डेतु आविस्युरित्याध्याहृत क्रियान्वित नारायणशब्दनिष्ठचतुर्थीपर्यन्तमन्यद्वाक्यं कैङ्कर्यस्य प्रार्थनारूपत्वात् । नमइति तृतीयवाक्यं मम किंचिन्नस्यात् नापि निरपेक्षकर्तृत्वं कुत्रापि नममेत्यर्थः । एषां त्रयाणांवाक्याना मेकवाक्यत्वे श्रीमन्नारायणचरणयोः सर्वदेश सर्वकाल सर्वावस्थोचितसर्वविध निरपराधकैङ्कर्यप्राप्त्यर्थं श्रीमन्नारायणचरणावुपायत्वेनाध्यवस्य प्रार्थनापूर्वकमात्मरक्षाभरं समर्पयामीति योजना । अत्रेयमनुष्ठानप्रक्रिया स्वानुष्ठानमुखेनाचार्यैः सुनिपुणमुपपादि—

संसारावर्तवेगप्रशमनशुभकृत(दृग्)देशिकप्रेक्षितोऽहं
संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्यशान्ताभिसन्धिः ।
निश्शङ्कस्तत्त्वदृष्ट्या निरुपाधिकदयं प्राप्य(र्थ्य) संरक्षकन्त्वां
न्यस्य त्वत्पादपद्मे वरदनिजभरं निर्भरो निर्भयोऽस्मि ॥

इति । अत्रापि मूलमन्त्रवत्तत्त्वत्रयानुसन्धानमर्थपञ्चकानुसन्धानं च स्वयमेव कर्तव्यमन्तेवासिभिः । सिद्धसाध्योपायविभागश्च पूर्वमेवोक्तत्वादत्र न विधीयते । अत्र 'मूलमन्त्रं जानित्वा द्वयेन संवर्ध्य द्वयैकनिष्ठो भवेत्' इत्यादीनि पूर्वाचार्यग्रन्थेषु वचनान्यनुसन्धेयानि । 'द्वयमर्थानुसन्धानेनसह सदैव वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व' इतीदं फलपर्यवसानभूमिं निगमयतीति गद्योक्तं निगम्यते । अन्यत्सर्वमाचार्यग्रन्थेषु तत्रतत्र विस्तरेण द्रष्टव्यमिति सर्वं समञ्जसम् ॥

लक्ष्म्या नित्यसमन्वितं गुणगणैर्जुष्टं च देहान्वितम्
देवं सिद्धमुपायमाह पुरतस्साध्यं प्रपद्येपदात् ।
मन्त्रोऽयं मधुसूदनप्रणयिनीयुक्तं पुनःख्यापयन्
अन्ते भोगहृदन्तरे मम सदा स्वत्वं न किंकुर्वतः ॥

शरणवरणवाणी तत्पराणां नराणां
करणविलयकाले कल्पनाकल्पशाखी ।
फलति फलमशेषं पद्मया विश्वधात्र्या
चलितभुजलताभ्यां चारु संश्लिष्यमाणः ॥

शरणागतिमन्त्रस्य संग्रहादर्थनिर्णयः ।
व्यधायि वरदार्येण वेदान्ताचार्यसूनुना ॥

इति विश्वामित्रकुलोद्भूतेन निखिलकवितार्किकचूडामणिना
सर्वतन्त्रस्वतन्त्रेण श्रीमद्वरदनाथापरनाम्ना
कुमारवेदान्ताचार्येण विरचिते
श्री म द्र ह स्य त्र य सा रा र्थ सं ग्र हे
द्वयाधिकारो द्वितीयः



श्रीमते निगमान्तमहागुरवे नमः

# अथ चरमश्लोकाधिकारः

एवमनुष्ठेयस्योपायस्य अधिकारनैरपेक्ष्याद्यपेक्षितार्थ विशदीकारमुखेन विधायकं वाक्यं चरमश्लोकः। तत्र पूर्वोत्तरार्धाभ्यां शरणागतिमन्त्रपूर्वोत्तर खण्डयोर्विवरणमिति मन्तव्यम्। तत्र कर्मयोग ज्ञानयोग भक्तियोगान्मोक्ष साधनत्वेनोपदिश्य तदनधिकारितया शोचतः फल्गुनस्योपायान्तरमत्र विधीयते। ततस्सर्वधर्मपरित्यागशब्द उपायान्तरानधिकारं प्रतिपादयति। तदनधिकारश्च पञ्चदशविधः। उक्तंह्याचार्यैः–

भक्त्यादौ शक्त्यभावः प्रमितिरहितता शास्त्रतःपर्युदासः
कालक्षेपाक्षमत्वंत्विति नियतिवशादापतद्भिश्चतुर्भिः।
एकद्वित्र्यादियोगव्यतिभिदुरनिजाधिक्रियास्संश्रयन्ते
सन्तश्श्रीशं स्वतन्त्रप्रपदनविधिना मुक्तये निर्विशङ्काः॥

इति। अयमस्यार्थः। शक्तिः–ज्ञानं—शास्त्रापर्युदासत्वं कालक्षेपाक्षमत्वमिति चत्वारि परस्परसंवलितानि भक्तेरधिकारः। तेषां विपर्ययस्तु प्रपत्तेरधिकारः। सविपर्ययश्च एकैकनिवृत्त्या चतुर्धा। द्विकद्विकनिवृत्त्या षोढा त्रिकत्रिकनिवृत्त्याचतुर्धा कृत्स्ननिवृत्त्याचैकश्चेति पञ्चदशविधः। शक्त्यादिमेळननिषेधस्य सर्वत्राप्यविशिष्टत्वात्। 'भक्त्यादौ शक्त्यभावः प्रमितिरहितता शास्त्रतःपर्युदासः कालक्षेपाक्षमत्वम्' इत्यभीषामेकैकसद्भावे द्विकद्विकसद्भावे त्रिकत्रिकसद्भावे चतुर्णामपि सद्भावे प्रपत्त्यधिकारो भवतीत्युक्तम्भवति। एवं च दुष्करोपायान्तरानधिकारिणो मुमुक्षोस्सुकरोपायो विधीयतइत्यर्थः॥

ननु कथं परित्यज्येति ल्यबन्तेसति अधिकारानुवादः। इत्थं समानकर्तृकयोः पूर्वकालइति समानकर्तृकत्वं पूर्वकालवर्तित्वं च ल्यबर्थः। ननु विधित्वमनुवादत्वंवा। तथाचसति 'विधिस्तु धारणे अपूर्वत्वात्' इति न्यायेन प्रतिपाद्यमानस्यार्थस्य प्रमाणान्तराप्राप्तत्वे विधित्व भवति, प्राप्तेत्वनुवादत्वमेव प्रदर्शयति। 'अप्राप्तेहि शास्त्रमर्थवत्' इतिहि न्यायविदः। एवंचोपायान्तरानधिकारिणस्तदनन्वयस्य प्रागेव प्राप्तत्वेनाधिकारिणोऽनुवादः क्रियतइति नविरोधः। अन्यथा–

' अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ।'
' त्रीन्लोकान् संपरिक्रम्य तमेव शरण गतः ।'
' लशुनं गृंजनचैव भुक्त्वा चान्द्रायणचरेत् ।'

इत्यादिषु ल्यबन्तप्रतिपाद्यस्य संसारप्राप्त्यादेरपि विधेयत्वं स्यात्। तेनानधिकारमेव प्रदर्शयति। शक्तस्यचाशक्तस्य च त्यागविधानायोगादिति नीतिविदां निर्णयः तेन स्वरूपत्यागविधिपक्षो नाङ्गीकार्यः । प्रमाणाविरुद्धविशिष्टविधि पक्षप्रकारभेदाश्चानन्तरमेव उपपादयिष्यन्ते। अत्र सर्वधर्मशब्देन मोक्षोपाय तया विहितभक्तियोगाभिधानमिति प्रकरणादवगम्यते। अर्थप्रकरणादीनामर्थ निर्णायकत्वात्। तत्र धर्मानिति बहुवचनं सद्विद्या दहरविद्यादिभेदेन ब्रह्मविद्यानां बहुत्वप्रकाशनार्थम्। इह ' वसन्ताय कपिञ्जलानालभेत ' इतिवद्बहुवचनस्य त्रित्वे पर्यवसाने प्राप्ते अशेषाणां ब्रह्मविद्यानां धर्मशब्देन परिग्रहार्थं सर्वशब्दोऽपि विशेषणत्वेन प्रयुज्यते ॥

एवंचसति सर्वास्वपि ब्रह्मविद्यासु अनधिकारएव प्रपत्तेराधिकार इत्युक्तं भवति। यत्तु कैश्चिदुक्तं प्रपत्तौ विश्वासहीनानां भक्तावधिकार इति तन्न। प्रपत्तिशास्त्रोपदेष्टॄणां व्यासादीनां भक्त्यधिकारिणां प्रपत्यविश्वासाभावात्। अन्यथा कथं तद्वाक्यप्रामाण्यादस्माभिः प्रपत्तिरनुष्ठीयते। ' नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते ' इति वचनमशक्तानां प्रपन्नाधिकारिणामेव केषांचिद्दुर्बलबुद्धीनां भक्त्याशानिवृत्यर्थं निन्दावचनमिति नकश्चिद्दोषः। तेन स्वयं शक्ता व्यासादयो भक्तिमनुतिष्ठन्ति। अशक्तानस्मान् प्रपत्तिमनुष्ठापयन्तीत्यर्थः। परित्यज्येति त्यागशब्देन विद्यान्तरानधिकारो लक्ष्यतएव। शक्तस्यचाशक्तस्य च त्यागविधानायोगादित्युक्तम्। अत्र परीत्युपसर्गः कर्मज्ञानयोरपि भक्तियोगाङ्गभूतयोरनधिकारं द्योतयति। अतो वर्णाश्रमधर्मादीनां नपरित्याग प्रसङ्गः ॥

त्रिविधं हि कर्मानुष्ठानम्। स्वर्गाद्यर्थं ब्रह्मविद्यानिष्पत्यर्थं नित्यनैमित्तिकात्मकंचेति। उक्तं च सूत्रकारैः ' विहितत्वाच्चाश्रमकर्मापि ' ' सहकारित्वेन च ' इति। तत्र यथा मुमुक्ष्वधिकारिणां भक्तियोगनिष्ठानामनुष्ठीयमानेष्वपि कर्मसु स्वर्गाद्यर्थता निवर्तते। एवमकिंचनाधिकारिणां कैङ्कर्यरूपतया यावत्

शक्त्यनुष्ठीयमानेषु नित्यनैमित्तिककाम्येषु कर्मसु ‘ सहकारित्वेनच ’ इति सूत्र प्राप्तमेव विद्याङ्गत्वं निवर्तते । ‘ विहितत्वात् ’ इति सूत्रप्राप्तमाश्रमादिधर्मत्वंतु न निवर्ततएव । इयान्विशेषः—प्रपन्नाधिकारिभिरनुष्ठीयमाने कर्मणि भगवदाज्ञारूपतया केवलमकिञ्चनस्यैवाधिकारिणः स्वयम्प्रयोजनत्वेनानुष्ठीयत इति तेषामवश्यानुष्ठेयत्वम् । ‘ मनीषीवैदिकाचारं मनसापि नलङ्घयेत् ’ इतिसिद्धम्॥

अथवा सर्वधर्मशब्देनैव कर्मयोगादेरपि निवृत्तत्वात् परित्यज्येत्यत्र परि रुपायान्तरेषु नैराश्यं द्योतयति । अनेनानागतानन्तकालसमीक्षयाऽप्यदृष्टसन्तारोपायत्वरूपं आकिञ्चन्यमुक्तम्भवति । अतोऽयमनधिकारानुवाद इत्याद्योऽयमर्थः । अथवा नैरपेक्ष्यविशिष्टोऽयमुपायो विधीयते । तथाहि सद्विद्यादीनां कर्मयोगाद्यङ्गकत्वदर्शनात् ब्रह्मविद्यात्वसाधारण्यात् न्यासविद्यायामपि कर्मयोगाद्यङ्गकत्वमाशङ्कमानस्य तन्नैरपेक्ष्यविशिष्टशरणवरणं विधीयते ॥

यद्वा उपायान्तराशक्तस्यैवाधिकारिणः स्वाधिकारपुरस्कारात्मककार्पण्य विशिष्टं शरणवरणं विधीयत इति विशिष्टविधिर्नविरुध्यते । किंचोपायान्तरसकृत्वादिभिः पञ्चभिर्हेतुभिस्सुकरोपाया विश्वासादुपायान्तरे प्रवर्तमानस्य दुर्बल बुद्धेः कस्यचिदधिकारिणः तत्प्रवृत्तिव्यतिरेकविशिष्टा शरणागतिर्विधीयत इति । एवंवात्र प्रवर्तमानोऽपि दुर्बलबुद्धिस्ततएवाविश्वासादुपायान्तरमभिवांछति । तस्याप्युपायान्तरप्रत्याशानिवृत्तिविशिष्टं शरणवरणं विधीयत इति ॥

अपिच यथाखलु भक्तेःप्रपत्तिसापेक्षत्वं एवं प्रपत्तेरपि भक्तियोगसापेक्षत्वं तदङ्गसापेक्षत्वं वाऽस्त्विति मत्वा प्रपत्यङ्गत्वेन भक्त्यादीन् स्वीकुर्वतःपुरुषस्य प्रपत्यङ्गत्वेन भक्त्यादिस्वीकारे पवनतनयबन्धनब्रह्मास्त्रन्यायेन प्रपत्तिरेव विगलेदिति विपक्षे बाधकप्रसङ्गेन तन्नैरपेक्ष्यविशिष्टं प्रपदनं संस्थाप्यतइति तत्राप्युपायान्तरसंसर्गासहत्वलक्षणं पूर्वविशेषणं शरणागतेरुपपद्यत इति विशिष्टविधित्वसिद्धिः ॥ तथाऽपि नस्वाङ्गनैरपेक्ष्यं प्रपत्तेः । अनुपकृतस्य करणत्वायोगात् । नखलु ब्रह्मास्त्रस्यापि रज्जुबन्धनादिनैरपेक्ष्ये सत्यपि ब्रह्मास्त्रप्रयोग विध्युपस्थापित तदङ्गनैरपेक्ष्यमुपपद्यते । अन्यथा बन्धनकरणत्वायोगात् । उक्तं हि ‘ नहि तत्करणं लोके वेदे वा किंचिदीदृशम् । इतिकर्तव्यतासाध्ये यस्यनानुग्रहेऽर्थिता ’ इति । अभिहितंचैतत्सर्वमाचार्यैः—

अतोऽशक्ताधिकारत्वमाकिञ्चन्यपुरस्क्रिया ।
अनङ्गभावो धर्माणामशक्यारम्भवारणम् ॥
तत्प्रत्याशाप्रशमनं ब्रह्मास्त्रन्यायसूचनम् ।
सर्वधर्मपरित्यागशब्दार्थास्साधुसम्मताः ॥

इति । अतः—' अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् । '
' त्रीन्लोकान् संपरिक्रम्य तमेव शरणंगतः । '

इत्यादिवदकिंचनाधिकारिणः उपायान्तराभावमनूद्य शरणवरणं विधीयत इत्यनुवादपक्षः । तस्यैवाधिकारिणो नैरपेक्ष्यादिविशिष्टं प्रपदनं विधीयतइति विशिष्टविधिपक्षः अतोद्वयोरपि पक्षयोर्निपुणं निरूपयतां नार्थविरोधः । उभयोरपि पक्षयोर्नित्यनैमित्तिकात्मनाऽनुष्ठीयमानस्य कर्मणो ब्रह्मविद्याशेषत्वेनास्वीकारात् वर्णाश्रमोचिततया भगवत्कैङ्कर्यरूपत्वेन स्वीकाराच्च । उक्तंचाचार्यैः—

विशिष्टेचानुवादेच पक्षयोरुभयोरपि ।
नस्वरूपपरित्यागः कर्तव्यानां च कर्मणाम् ॥

इति । इयान्विशेषः —विशिष्टविधिपक्षे विशेषणविशेष्ययोर्द्वयोरपि विधेयत्वम् । अनुवादपक्षे विशेष्यस्यैकस्येति अत्र उचितमर्थं स्वयमेव विदांकुर्वन्तु सन्तः । विधिविषये गौरवाल्लाघवमेव समुचितमिति मीमांसकाः । मामितिशरण्यगुण युक्तो भगवान् श्रियःपतिरभिधीयते । तेच गुणा नारायणशब्दव्याख्यानावसरे सौलभ्य सौशील्यादयः प्रागेव व्याख्याताः । एकशब्दस्यापि षोढार्थो वर्ण्यते । तदुक्तमाचार्यैः–

प्राप्यस्यैव प्रापकत्वं स्वप्राधान्यनिवारणम् ।
प्रपत्तेर्व्याजमात्रत्वमन्योपायैरनन्वयः ॥
तदङ्गैरप्यसम्बन्धस्सर्वसाध्येष्वभिन्नता ।
इत्थमर्थाष्षडाचार्यैरेकशब्दस्य दर्शिताः ॥

इति । एकशब्दस्त्वभिन्नं मुख्यं केवलं साधारणंचार्थं प्रतिपादयति । अत्र एक शब्दस्याभेदवाचित्वे प्राप्यप्रापकयोरैक्यं प्रसिध्यति । प्राप्यतया प्रापकतयाचैकमेवस्थितं मामित्यर्थः । स्वर्गादिषु पुरुषार्थेषु फलसाधनयोर्भिन्नत्वादत्रापि भिन्नत्वमाशङ्क्य निवार्यते । उक्तं च लौकिकैरपि–' सत्त्वेनैव फलप्रदःफलमपि

स्वेनैव नारायणः ' इति साध्योपाय साध्यप्राप्ययोरत्रापि भेदोऽस्त्येव। भक्ति प्रपत्त्योस्साध्योपायत्वादनुभवकैङ्कर्ययोः साध्यप्राप्यत्वाच्च। अतस्सिद्धोपायरूपो भगवान् स्वयमेव सिद्धप्राप्य इत्येकशब्देनाभिधीयते। एकशब्दस्य मुख्यवाचित्वे प्रपत्तिकर्तुश्चेतनस्याप्राधान्यं द्योत्यते। तत्कर्तृत्वस्यापि परमात्माधीनत्वात्। उक्तं च सूत्रकारैः ' कर्ता शास्त्रार्थवत्त्वात् ' ' परात्तु तच्छ्रुतेः ' इति॥

अथवा मुख्यत्ववाचिना तेनैवैकशब्देन प्रपत्तेर्व्याजमात्रत्वं द्योत्यते। नखलु लिकुचफलप्रदानमीप्सितराज्यप्राप्तये पर्याप्तम्। इदंकिलास्मदीयंपद्यम्–

चिदचिदधिपतीनां चिन्तनाच्चक्रवर्ती
परमपुरुषसेवा नित्यसांराज्यलक्ष्मीम्।
परिकलयति भक्त्यायोगिनां सार्वभौम-
प्रभृतिभिरविशेषं नम्रमात्रेण मूर्ध्ना॥

इति। यद्वा कैवल्यमनेनैकशब्देन बोध्यते केवलं भक्तियोगनिरपेक्षमित्यर्थः। तेनैव न्यायेन भक्तियोगांग कर्मज्ञानापेक्षा विधुरत्वमपि विधीयते॥

एतदुक्तं भवति प्रपन्नादन्यस्य न कदाचिदपि भगवान् मोक्षं प्रयच्छति प्रपन्नश्च द्विविधः। अङ्गप्रपत्तिनिष्ठस्स्वतन्त्रप्रपत्तिनिष्ठश्चेति। अङ्गप्रपत्तिनिष्ठस्य भक्तियोगादिनिष्ठायुक्तो भगवान् मोक्षं प्रयच्छति। स्वतन्त्रप्रपत्तिनिष्ठस्य तु उपायान्तरस्थाने स्वस्थाने च स्वयमेवोपतिष्ठमानः फलं प्रयच्छति। इदमेवोपायान्तरस्थानापत्तिरिति निरपेक्षोपायत्वमिति च कथ्यते। अयमेव न्यासविद्यायां वेद्याकारः। ननु सर्वधर्मपरित्यागवचनेऽपि नैरपेक्ष्यमुक्तम्। अत्रापि कथं नैरपेक्ष्यमभिधीयते। अत्र कैश्चिदाचार्यैर्नैरपेक्ष्यपरिग्रहः। अत्राप्यपरैराचार्यैरिति योजनाभेदान्नपौनरुक्त्यादिदोषः॥

अथवा तत्र शरणं व्रजेति विहितस्य साध्योपायस्य नैरपेक्ष्यं विहितम् अत्रतु सिद्धोपायस्य परस्य ब्रह्मण इति विशेषः। तथाऽपि प्रपत्त्याऽपि नैरपेक्ष्यं सिद्धोपायस्य भगवतइति न मन्तव्यम्। शरणं व्रजेति विधानस्यैवायोगात्। इदमेवहि नैरपेक्ष्यं प्रामाणिकैरभिधीयते यत्स्वतन्त्रसहकारिनैरपेक्ष्यं तथा नप्रपत्तिनैरपेक्ष्यं प्रामाणिकैरभिधीयते। किंतु स्वतन्त्रसकारिनिरपेक्षत्वम्। स्वाधीनसहकारिसापेक्षत्वंतु भगवतो भाष्यकारादिभिरभिधीयतएव। अन्यथा ईश्व-

रत्वस्यैव परित्यागप्रसङ्गः। नखल्वीशितव्यमन्तरेणेश्वरत्वं सम्भवति। अतः प्रपत्तिप्रसादितस्यैवेश्वरस्य मोक्षप्रदत्वं तन्नैरपेक्ष्यभङ्गकमित्यविचारकाणां वचनम्। अतः प्रपत्तिव्यतिरिक्तभक्तियोगादि नैरपेक्ष्यमत्रैकशब्देन विवक्ष्यतइति निर्णयः। प्रपत्तिस्वरूपमपि भगवदायत्तमिति नतत्सापेक्षतादिदोषः। तेन भगवानेव साक्षान्मोक्षसाधनम्। इतरत्तत्प्रसादनं तदपिच तदङ्गादिकं च तदधीनमिति॥ एकशब्दस्य साधारणवाचित्वेऽपि भगवतस्सकलफलप्रदत्वं प्रतीयते। एकं सर्वेष्वपि फलेषु प्रदातृत्वेन साधारणं मामित्यर्थः। 'एकेमुख्यान्यकेवलाः' इत्येकशब्दस्यान्यपर्यायत्वेन वैलक्षण्यवाचकत्वे ब्रह्मणि श्रीनिवास इतिवाच्छ्रियःपतित्वलक्षणं वैलक्षण्यं प्रकाशयतइत्याहुराचार्याः। तेन श्रीमन्नारायणशब्दार्थोऽपि सिध्यति। शरणशब्दः पूर्ववद्व्याख्येयः। व्रजेति गत्यर्था बुध्यर्था इति न्यायेन विश्वासप्रार्थनापूर्वकमात्मरक्षाभरन्यासं प्रतिपादयति। एवं वाक्यार्थः उपायान्तराशक्त्यादियुक्तः त्वं मामेकं शरणं व्रजेति॥

अथवा कर्मयोगादीनंगत्वेनास्वीकृत्य मामेकं शरणं व्रजेति। यत्तु वर्णाश्रमधर्मादि स्वरूपत्यागं सर्वधर्मपरित्यागशब्दार्थं वर्णयन्ति तेषां श्रुतिविरोधान्न्यायविरोधात्प्रपत्तिप्रतिपादक तत्तदध्यायविरोधात्संप्रदायविरोधाच्च यथेच्छाचारश्रद्धैव मूलमिति सन्तो न बहुमन्यन्ते। उक्तंहि प्रपत्त्यध्याये—

प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः।
मनीषी वैदिकाचारं मनसाऽपि नलङ्घयेत्॥
यथाहि वल्लभो राज्ञो नदीं राज्ञा प्रवर्तिताम्।
लोकोपयोगिनीं रम्यां बहुसस्यविवर्धिनीम्॥
लङ्घयन् शूलमारोहेदनपेक्षोऽपितां प्रति।
एवं विलङ्घयन् मर्त्यो मर्यादां वेदनिर्मिताम॥
प्रियोऽपि नप्रियोमेऽसौ मदाज्ञाव्यतिवर्तनात्।

इति। अत्रच सकृत्कृतश्शास्त्रार्थ इतिन्यायेन प्रपदनानुष्ठानस्य स्वतःप्राप्तं सकृत्कर्तव्यत्वं 'आवृत्तिरसकृदुपदेशात्' इत्युक्तब्रह्मविद्यात्वसाधारण्यादपोदितमपि 'सकृदेवहि शास्त्रार्थः कृतोऽयं तारयेन्नरम्।' इत्यादिभिर्वाक्यैरुत्तभ्यते। इदमेवहि सकृत्त्वमभिप्रेत्य शरणागतिमन्त्रेऽपि प्रपद्यइति वर्तमाननिर्देशः

प्रपदनस्य तत्कालमात्रसम्बन्धएवहि तत्र कर्ता वर्तमानत्वेन व्यपदिश्यते । एवंविधस्यापि शरणवरणस्योपादानवेलायां तत्रतत्र शरणागतिस्सम्बन्धज्ञान-मात्रं, अधिकारिविशेषणमात्रम्, सिद्धोपायप्रतिपत्तिमात्रम् अनिवारणमात्रम्, अनुमतिमात्रम् अचिव्यावृत्तिमात्रं चेतस्समाधानमात्रं चैतन्यकृत्यमित्यादिकं यदभिधीयते प्रपत्तिशास्त्रनिष्ठैः कैश्चिद्विद्वद्भिस्तत्सर्वं विधेयभूतभरन्यासात्मक प्रपत्त्यनुष्ठानान्तर्गत तत्तदर्थप्रकाशनाभिप्रायेणेति तात्पर्यान्तरकल्पनया परिहर्तव्यम् ॥

तथाहि अस्ति खलु भगवति भरं न्यस्यतः शेषत्वज्ञानं तदेवखलु सम्बन्धज्ञानमिति तैरभिधीयते । तच्च श्रवणादेव सिद्धमधिकारोपायफलदशास्वनुवर्तते च । तस्मिन्प्रपत्तित्वव्यवहारो राजान्तरङ्गपुरुषे राजत्वव्यवहारवदिति न विरोधः । एवमर्थान्तरेष्वपि स्वयमेवोहनीयम् । तेषां स्वरूपमेव प्रदर्शयामः । अधिकारिविशेषणं स्वर्गकामइतिवत्फलाकाङ्क्षा सिद्धोपायप्रतिपत्तिरीश्वरः सिद्धोपायइतिनिश्चयः । अनिवारणं संरक्षतो भगवतः प्रातिकूल्यवर्जमपराधाननुष्ठानमित्यर्थः । तच्च प्रपत्त्यङ्गमेव प्रातिकूल्यवर्जनात्मकत्वात् । अनुमतिः स्वयमेव रक्षणे प्रवर्तमानस्य तत्प्रीतिसंधुक्षणं तद्भरन्यासात्मकं च एतत्प्रपत्तिरेव । नचेत्तदविनाभूतं यत्किंचिदङ्गं भवतु तथाऽपि च न दोषः । चित्तसमाधानं भगवति स्वीकृतभरे निर्भरत्वानुसन्धानेन समाहितचित्तत्वं तच्च प्रपत्तिफलमेव चैतन्यकृत्यं स्वयं ज्ञातृत्वात्स्वज्ञानानुगुणस्वोचितकृत्यानुष्ठानम् । अन्यथा संम्बन्धज्ञानाद्यङ्गीकारेण भरन्यासरूप प्रपत्तिस्वरूपनिराकरणे बहुप्रमाणविरोधः सत्सम्प्रदायविरोधः, विधिवैयर्थ्यं मूलमन्त्राद्यर्थविभागविरोधो न्यायविरोधश्च प्रसज्येत ॥

एवमचिव्यावृत्तिमात्रमित्यादि शब्दानामर्थो निर्वाह्यः । नैतेह्यर्थास्साक्षात्प्रपत्तिस्वरूपम् । तथाऽपिप्रपत्त्यनुष्ठातॄणां सम्भवति । एतावतैतेषु प्रपत्ति व्यवहार इति न सङ्कटं किंचित् । औपचारिकव्यवहारस्य सर्वत्र सुलभत्वात् । तथाच 'न्यासइति ब्रह्म' इत्यादिकमपि सिद्धोपायप्राधान्येन ब्रह्मणि प्रतिपत्त्यर्थमौपचारिकमेव । नखलु सिद्धसाध्योपाययोः स्वरूपैक्यं सम्भवति ॥

एवं पूर्वार्धेन प्रपत्यनुष्ठानं विधाय न्यस्तभरमधिकारिणमुत्तरार्धेन सर्व पापमोक्षणरूप तत्फलोपदेशपूर्वकं निरशोकयति । अहमित्यादिना । अहं सर्व

पापमोक्षणोपयुक्तज्ञानशक्त्यादिसामर्थ्ययुक्तः । त्वां न्यस्तभरतया निर्भरं त्वां सर्वपापेभ्यो मोक्षयिष्यामि । अयं खलु सर्वपापमोक्षणप्रकारस्स्वयमेवाचार्यैः स्पष्टमभिहितः—

प्रारब्धेतरपूर्वपापमखिलं प्रामादिकंचोत्तरम
न्यासेन क्षपयन्ननभ्युपगतप्रारब्धखण्डं च नः ।
धीपूर्वोत्तरपाप्मनामजननाज्जातेऽपि तन्निष्कृतेः
कौटिल्येसति शिक्षयाप्यनघयन् क्रोडीकरोति प्रभुः ॥

अयमर्थः द्विविधं खलु पापम् । पूर्वाघमुत्तराघंचेति । पूर्वाघं च द्विविधम् । प्रारब्धमप्रारब्धंचेति । अनुमतमननुमतंचेति । उत्तराघं च द्विविधम् । बुद्धि पूर्वकमबुद्धिपूर्वकंचेति । बुद्धिपूर्वकं च द्विविधम् । कृतप्रायश्चित्तमकृतप्राय श्चित्तंचेति । तत्र प्रारब्धव्यतिरिक्तं पूर्वाघमबुद्धिपूर्वमुत्तराघं च विद्यारम्भसमये भक्तिनिष्ठस्य निवर्तते । तत्र पूर्वाघस्य विनाशः उत्तराघस्याश्लेषः । प्रपत्तिनिष्ठस्यतु अप्रारब्धपूर्वाघनिवृत्तिवत् प्रारब्धपूर्वाघेऽप्यननुमतांशो निवर्तते।

उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी ।
साध्यभक्तिस्तु साहन्त्री प्रारब्धस्यापि भूयसी ॥

इति वचनात् । उपायभूता भक्तिर्यस्यास्सा उपायभक्तिः । साध्या भक्तिर्ययेति साध्यभक्तिः । अयमर्थः प्रपत्तिर्ह्युपायान्तरभूतां भक्तिं स्वयमङ्गभूतासती प्रसाधयति । फलभूतांतु भक्तिं स्वातन्त्र्येण स्वयमेव साधयति । प्रारब्धं तु दुरितं नाशयति । अतो भक्तेः प्रपत्तिर्भूयसीति । अतएवैतद्देहावसानएव मोक्षः । आर्तदृप्तविभागोऽप्यनेन न्यायेन सिद्धः ॥

येखलु शरणागतिमन्त्रोच्चारणमेव प्रस्थानशङ्खनादीकृत्य परमपदं प्राप्नुवन्ति तएवखल्वार्ताः । येतु देहावसानविलम्बं सहन्ते ते दृप्ता इति विभागः । उत्तराघेष्वबुद्धिपूर्वांशो भक्तिनिष्ठस्येव प्रपत्तिनिष्ठस्यापि न श्लिष्यते । विवेकिनस्तु प्रपन्नाः बुद्धिपूर्वकमुत्तराघमेव नारभन्ते । मध्यमाः पुनःप्रारब्धं पापं यथाधिकारं प्रायश्चित्तेन परिहरन्ति । तत्रापि तत्तत्पापानुरूपप्रायश्चित्तेषु शक्तौ सत्यां तान्येवानुतिष्ठन्ति । तदभावे तु पुनःप्रपत्तिरेव प्रायश्चित्तं भवति । अन्यथाऽतिप्रसङ्गात् । ' अनन्यसाध्ये स्वाभीष्टे ' इति वचनविरोधाच्चेति । इदमेव

अभिप्रेत्योक्तं प्रपत्तिविधानशास्त्रे—

अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् ।
प्रायश्चित्तिरियं साऽत्र यत्पुनश्शरणं व्रजेत् ॥

इति । अत्रेतिपदं प्रतिपदोक्तप्रायश्चित्तासामर्थ्यं परामृशति । असामर्थ्यस्य तत्रतत्र नियतत्वात् । नचैतावता पुनः प्रपत्तिविरोधः । संसारमोक्षणार्थत्वात्पूर्व प्रपत्तेस्तादात्विकभगवदपचारोपशमनार्थत्वात् उत्तरप्रपत्तेः । एकफलत्वे हि पुनःप्रपत्तिदोषः । ये तावदस्मदादिवत्कठिनप्रकृतयो भगवदपचारानपि बुद्धिपूर्वान् लेशतोऽनुतिष्ठंति, नच प्रायश्चित्तं चरन्ति । तेषामविधेयपुत्रादीनां पित्रा ह्यपराधइव हितैषिणा भगवतैव लघुदण्डप्रदानेनापचारनिवारणं क्रियते । उक्तं चाचार्यैः–

विवेकिनां प्रपन्नानां धीपूर्वागस्यनुद्यमः ।
मध्यानामनुतापादिश्शिक्षा कठिनचेतसाम् ॥

इति । नखलु राजपुत्राणां राजापराधेऽपि भृत्यवद्दण्डकरणम् । 'लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत् ।' इतिचाभिधीयते । 'नखलु भागवतायमविषयं गच्छन्ति । इहैवैषां केचिदुपप्लवा भवन्ति कञ्जा भवन्ति काणा भवन्ति अविधेयपुत्रा भवन्ति' इत्यादि च श्रूयते । 'परिहरमधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां नवैष्णवानाम् ।' इत्यादिच प्रसिद्धं यमवचनम् । 'भवतां भ्रमतामत्र विष्णुसंश्रयमुद्रया ।' इत्यत्रापि यमवचनं श्रूयते । अतः कृतकृत्यस्याधिकारिणः केनाप्युपायेन सर्वपापमोक्षणं कृत्वा मनोरथसुलभेन वैकुण्ठवैमानिकोन्नीतेन महारथेन स्वात्मानं प्रापय्य सर्वदेश सर्वकालाद्यनुगुणं कैङ्कर्य साम्राज्यं प्रयच्छति भगवान् श्रियःपतिरिति सर्वं सुलभम् । अनिष्टनिवृत्तेरिष्टप्राप्तिपर्यवसायित्वात् । 'मामेवैष्यसि' इति पूर्वोक्तत्वाच्च । 'माशुचः' पूर्वं भवतश्शोकः पुनरधिकारान्तरनिवेशाद्गुणकोटिमाटीकते । इदानीं सर्वज्ञे परमकारुणिके सत्यसङ्कल्पे मयि स्वीकृतभरे पुनश्शोचसिचेदनभिज्ञकृत्यमेवापाद्येतेति भावः ॥

अत्रापि शरणागतिमन्त्रवदमूनि त्रीण्यवान्तरवाक्यान्येकवाक्यतां भजंते । अयमर्थः उपायान्तरानधिकृतस्त्वं सर्वसुलभत्व सत्यसङ्कल्पत्व सर्वफलप्रदत्व करुणादिपरिकर्मिनं मामेकमेव शरणमध्यवस्यानुकूल्यसङ्कल्पादिपरिकरपञ्चको-

पेतमात्मरक्षाभरन्यासं कुरु। सर्वशक्तिपरमकारुणिकत्वादिगुणोपेतोऽहं न्यस्त भरं 'त्वां सर्वपापेभ्यो मोक्षयिष्यामि' स्वीकृतभरे मयि जाग्रति त्वंतु निस्संशयस्सुखमास्वेति। तथाचायमत्र विध्यर्थः। सर्वपापनिवृत्तिपूर्वकपरमात्मप्राप्तिकामोऽकिंचनस्तमेव भगवन्तं शरणमुपगच्छेदिति ॥

नच भाष्यकारैरेतस्य वाक्यस्यांगप्रपत्तिपरत्वेन योजनायाःकृतत्वा न्न स्वतन्त्रप्रपत्तिपरत्वमिति भ्रमितव्यम्। अयंखलु भाष्यकाराणामभिप्रायः। यथाखलु भगवान् सकलफलप्रदस्तत्रतत्र जोघुष्यते तद्वत्प्रपत्तिरपि सकलफल प्रदायिनी–

अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्।
तदेकोपायता याच्ना प्रपत्तिश्शरणागतिः ॥

इति वचनात्। तथाचायमर्थस्सम्पन्नो भवति। प्रपत्तेस्सकलफलप्रदत्वादङ्गत्वेन निवेशे भक्तियोगादीनपि साधयितुं शक्नोतीति भाष्यकारैरभिधीयते ॥

एवं च सति भक्तियोगाद्यनुष्ठानविरोधिप्राचीनपापतरणकामस्य कृच्छ्रचान्द्रयणादि तदुचितोपायान्तराभावेन तत्स्थाननिविष्टा प्रपत्तिर्यथा भक्तियोगादीन् सम्पादयति। एवं सर्वपापतरणकामस्य तदुचितोपायान्तराभावेन तत्स्थाननिविष्टा प्रपत्तिस्स्वतन्त्रासती सर्वपापमोक्षणं करिष्यतीति भाष्यकाराणां हृदयम्। 'यो ब्रह्माणं विदधाति पूर्वं योवैवेदांश्च प्रहिणोतितस्मै तगूँहदेवमात्म बुद्धिप्रकाशं मुमुक्षुर्वैशरणमहं प्रपद्ये' इति श्रुतावेव साक्षान्मोक्षसाधनतया प्रपत्तिविधानात्तदुपबृंहणत्वाच्चरमश्लोकस्य। एतत्सर्वमभिप्रेत्योक्तमाचार्यैः–

सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना।
ससतस्याहमेवेति चरमश्लोकसङ्ग्रहः ॥

इति। विशिष्टानुवादौ च तैरेव प्रकटितौ।

अधिकारं पुरस्कृत्योपायस्य निरपेक्षताम्।
एकशब्देन वक्तीति केचिद्वाक्यविदो विदुः ॥ इति।
नैरपेक्ष्यं पुरस्कृत्य विहितस्य लघीयसः।
उपायस्याधिकारन्तु शोकद्योत्यं विदुःपरः ॥

इति। द्वयमत्र प्रकाश्यम्। आकिंचन्यं नैरपेक्ष्यंचेति। अत्र तावदेके खल्वा-

चार्यास्सर्वधर्मपरित्यागशब्देन आकिंचन्यरूपमधिकारमनूद्य मामेकमित्येकशब्देन नैरपेक्ष्यं प्रकाश्यतइत्याचक्षते। अन्येतु सर्वधर्मपरित्यागवचनेनैव शरणवरणस्य विशेषणत्वेन नैरपेक्ष्यमभिधेयम्। 'माशुच' इति वचनेन उपायान्तरानधिकारनिमित्त शोकप्रतिक्षेपवचनात्तदेवाकिंचन्यमधिकारतया द्योत्यते इति कथयान्ति। उभयेषामाचार्याणामाकिंचन्यं नैरपेक्ष्यमप्यनुमतमिति नकश्चिदर्थविरोधः। केवलं वाक्ययोजनायामेव भेदः॥

नित्यनैमित्तिकं कर्म स्वतन्त्राज्ञानुपालनात्।
प्रपन्नानान्तु कर्तव्यमिति वेदान्तनिर्णयः॥
शरणागतिनिष्ठाहि परमैकान्तिनो मताः।
तेषां कैङ्कर्यरूपेण कर्तव्यं कर्म निर्मलम्॥
इत्येवं भाष्यकारैश्च तच्छिष्यैरपि देशिकैः।
सत्सम्प्रदायनियमस्तत्तन्नित्येषु वर्ण्यते॥

इत्थं प्रमाणाविरोधेन द्वयोरपि पक्षयोरर्थान्तरसम्भवे कैश्चिदाधुनिकैस्सर्वधर्मस्वरूपत्यागरूपार्थान्तरकल्पना प्रमाणविरोधात्प्राक्तनाचार्यग्रन्थविरोधात् आसेतुहिमाचलं श्रीमद्रामानुजाचार्य सिद्धान्तानुष्ठानविरोधात् 'श्रुतिस्मृत्युदितम्' इति स्वाचार्यवचनविरोधात्प्रपत्त्यध्यायएव 'अविप्लवाय धर्माणाम्' इत्यारभ्य 'मनीषी वैदिकाचारं मनसाऽपि न लङ्घयेत्' इति विश्वजगन्मातुर्विष्णुपत्न्या वचनाविरोधाच्च प्रामाणिकानां चेतसि न चमत्कारमाविष्करोतीत्येषा दिक्॥

इत्थं यावच्छरीरपातं निरपराधकैङ्कर्यपराणां परमैकान्तिनामनितरसुलभेन देवयानेन परमपदं प्राप्य 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्युक्तक्रमेण यथावस्थितस्वरूपाविर्भावपूर्वकासंकुचितब्रह्मानुभवेन तत्पूर्वकेण सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविधकैङ्कर्यलाभेनच नित्यमेवावस्थानमिति 'इमान्लोकान्' इत्यादिश्रुतिः प्रातिष्ठिपत्॥

यत्तु कैश्चिदुच्यते। ज्ञानयोगनिष्ठः केवलोऽप्यर्चिरादिमार्गेण परमपदं प्राप्य भगवन्तं दृष्ट्वा भगवदनुभववैमुख्येन स्वात्मानमेवानुभवन् परित्यक्तपत्नीवत् कोणे कुत्रचिदास्त इति तत्सूत्रभाष्यादिविरुद्धत्वात् बहुप्रमाणाविरोधाद्युक्तिविरोधाच्च नास्माभिरनुमन्यते। 'श्रुतोपनिषत्कगत्यभिधानाच्च' इत्यस्मिन्सूत्रे

ब्रह्मविदामेवार्चिरादिगमनपूर्वक ब्रह्मप्राप्तिरित्युपपादितम्। दहरविद्यायामपि प्रजापतिवाक्ये जीवपरब्रह्मप्राप्तिरूप फलनिर्देशो जीवानुसन्धानस्य ब्रह्मविद्याशेषत्वेनैवेति भाष्यकारैरभ्यधायि। तद्यथा ब्रह्मविद्याफलत्वेन उपसंहृतमिति तेन ज्ञानयोगस्य ब्रह्मविद्याङ्गत्वे अर्चिरादिमार्गेण परमपदप्राप्त्यादिकमस्ति। कर्मज्ञानयोरङ्गिफलेनैवाङ्गानां फलवत्त्वम्। स्वातन्त्र्ये पुनः प्रकृतिमण्डलएव यत्रकुत्राप्यवस्थाने जीवात्मानुभवः फलम्। तदेवोच्यते भगवता पराशरेणापि—'योगिनाममृतं स्थानं स्वात्मसन्तोषकारिणाम्।' इति। अत्र स्थानस्यामृतत्व वचनं चिरकालावस्थानपरम्॥

अथवा जीवस्वरूपनित्यत्वपरम्। तदा तु स्थानमिति च स्वरूपमेवोच्यते। ब्रह्मविद्यायामेवार्चिरादिमार्गेण परमपदप्राप्तिरित्येतदपि तेनैव पराशरेण विशदमुक्तम्।

एकान्तिनस्सदा ब्रह्म ध्यायिनो योगिनो हि ये।
तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः॥

इति। उपायदशायां रामानुजमितिवद्ब्रह्मशरीरभूतस्वात्मानुसन्धायिनो लक्ष्मणपूर्वजमिति स्वात्मशरीरकपरमात्मानुसन्धायिनो वा ब्रह्मध्यायिनएव फलदशायांत्वसंकुचितब्रह्मज्ञानरूपत्वात् सदा ब्रह्मानुभवसिद्धिः। पूर्वोक्तस्य केवलस्य तु नेति विभागः। तस्यापि तत्फलांते 'सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्' इति च्यवनधर्मत्वमुच्यते॥

तथा च पूर्वकर्मविशेषात्पुनर्विषयानुभवोऽपि न सम्भवतीति च्यवनधर्मत्वं युज्यते। भागधेयपरिपाकविशेषवशात् पुनर्भगवदुपासनमस्तिचेत्फलतयाऽर्चिरादिना भगवत्प्राप्तिरिति तत्त्वविदां निर्णयः। तावता तस्याप्यपुनरावर्तिवचनं युज्यतां नाम कोदोषः, तेन पुराणेषु तद्व्याख्यानेष्वाचार्यग्रन्थेषु ज्ञानयोगनिष्ठस्यार्चिरादिगमनाभिधानं यद्यस्ति तत्तु भक्तियोगद्वारेणैवेति निर्णतव्यम्। न पुनर्भक्तियोगानङ्गभूतज्ञानयोगनिष्ठस्य साक्षाद्भगवत्प्राप्तिरर्चिरादिगमनं च भवति युक्तिविरोधस्तु परमपदं गत्वा भगवन्तं विहाय स्वात्मानमेवानुभवतीति कैश्चिदभिधीयमानः किं सर्वकर्मविनिर्मुक्तः, उत कर्मवशएव वा—अन्त्ये संसार्येव भवति नतु मुक्तः। सर्वधर्मविनिर्मुक्तत्वे पुनः स्वाभाविकस्य असंकुचित

ब्रह्मानुभवस्य सङ्कोचाभावाद्ब्रह्मानुभवविच्छेद एव न स्यात्। स्वाच्छन्द्यादेव परब्रह्मानुभवं मुक्त्वाऽवतिष्ठते केवलइति हास्यमेतत् ॥

सर्वकर्मविनिर्मुक्तस्य परब्रह्मानुभवविच्छेदरूपमहानर्थप्रवृत्त्यसम्भवात् ईश्वरएकएव तस्मिन्विषये निगृह्णाति तेन तदनुभवविच्छेदइति दुर्वचम्। ईश्वरो निष्कारणमेव कुत्रचिन्निगृह्णातिचेत् तस्य निर्हेतुकनिग्रहस्स्यात्। सतु महान्दोषः सकारणंचेत्कर्मैवहि कारणं तन्निवृत्तमेवेति प्रागेवोक्तम् ॥

तदेकदेशानुवर्तने मुक्तिरेव नभवेदित्यादिदोषसहस्रेण दुष्टमेव। तस्माद्यः परमैकान्ती भक्तिप्रपत्त्योरन्यतरोपायेन भगवन्तं प्रसाद्यावतिष्ठते सएव हि सिद्धोपायनिष्ठः सचार्चिरादिमार्गेण परमपदं प्राप्नोति, भगवन्तं प्राप्य भगवदनुसारिभिः कैङ्कर्यकलापैस्सर्वतो विलसतीति समञ्जसमेतत् ॥

विमलमतिविशेषाद्वीक्ष्यहेयान् पुमर्थान्
स्थिरविनिहितबुद्धिर्यस्तु कैवल्यमुक्तः।
पुनरपि च भवेत्सा संसृतिस्तस्य काले
हरिभजनविपाकान्मुक्तिरेवाथवास्यात् ॥
वरुणनिलयकन्या वल्लभस्यैव पादे
शरणवरणवाणी तत्पराणां नराणाम्।
चरणमनितराणां निर्मलं निर्मलानाम्
शरणमिहपरत्राप्यन्वहं सम्प्रतीमः ॥

तस्माद्भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमखण्डमकुण्ठधिष्ण्यम्।
निर्वाणधीरहमिव वृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥

श्रीमत्त्रय्यन्तसिद्धान्त देशिकेन्द्रस्य सूनुना।
रहस्यत्रयसारार्थो वरदार्येण वर्णितः ॥

इति विश्वामित्रकुलोद्भूतेन निखिलकवितार्किकचूडामणिना
सर्वतन्त्रस्वतन्त्रेण श्रीमद्वरदनाथापरनाम्ना
कुमारवेदान्ताचार्येण विरचिते
श्री म द्र ह स्य त्र य सा रा र्थ सं ग्र हे
चरमश्लोकाधिकारस्तृतीयः